यो... स्तथा मधुचनात्सराब्भावद्धौ विशुद्धामपि यत्समग्राम् ।

(१० वी) श्री गणेशाय नमः

(२१) तामङ्कमारोप्य कृशाङ्गयष्टिं, वर्णान्तराक्रान्तपयोधराग्रां

(६५) विलज्जमानां रहसि प्रतीतः पपौ च रामां रमणोऽभिलाषम्

६६ मा लोकवादश्रवणादहासीः श्रुतस्य किं तत्सदृशं कुलस्य

तदेति तस्याः

६७ स ... प्रतिगृह्य वाचं रामानुजे दृष्टिपथं व्यतीते

सा मुक्तकण्ठं व्यसनातिभाराच्चक्रन्द विग्ना कुररीव भूयः

(६९) नृत्यं मयूराः कुसुमानि वृक्षा दर्भानुपात्तान्विजहुर्हरिण्यः

(१९ अ०) सातिरेकमदकारणं रहस्तेन दत्तमभिलेषुरङ्गनाः

१:- ताभिरप्युपहृतं मुखासवं सोऽपिबद्बकुलतुल्यदोहदः ।

चारु नृत्यविगमे च तन्मुखं स्वेदभिन्नतिलकं परिश्रमात् ।

२:- प्रेमदत्तवदनानिलः पिबन्नत्यजीवदमरालकेश्वरौ ॥

तस्य सावरणदृष्टसन्धयः काम्यवस्तुषु नवेषु सङ्गिनः

३:- वल्लभाभिरुपसृत्य चक्रिरे सामिभुक्तविषयाः समागमाः ॥

अङ्गुलीकिसलयाग्रतर्जनं भ्रूविभङ्गकुटिलं च वीक्षितम् ।

४:- मेखलाभिरसकृच्च बन्धनं वञ्चयन्प्रणयिनीरवाप सः ॥

तेन दूतिविदितं निषेदुषा पृष्ठतः सुरतवाररात्रिषु ।

५:- शुश्रुवे प्रियजनस्य कातरं विप्रलम्भपरिशङ्कितं वचः ॥

चालीसा मंत्र उपद्रविनाश

①

| 12 | 19 | 2 | 7 |
|---|---|---|---|
| 6 | 3 | 16 | 15 |
| 18 | 13 | 8 | 1 |
| 4 | 5 | 14 | 17 |

चौंतीसा यंत्र सर्व ग्रह शान्ति

②

| 9 | 16 | 2 | 7 |
|---|---|---|---|
| 6 | 3 | 13 | 12 |
| 15 | 10 | 8 | 1 |
| 4 | 5 | 11 | 14 |

③

| 2 | 9 | 2 | 7 |
|---|---|---|---|
| 6 | 3 | 6 | 5 |
| 9 | 3 | 8 | 1 |
| 4 | 5 | 4 | 7 |

बीसा मंत्र दिष्टी दोष निवारं विष यंत्र

प्रथम भाग

## नागरिक शास्त्र के सिद्धान्त

नागरिक शास्त्र, अर्थ, परिभाषा, क्षेत्र, तथा महत्व,

### प्रथम परिच्छेद,

"नागरिक शास्त्र मानव ज्ञान की वह शाखा है जो नागरिक से ~~सम्बन्ध~~ सम्बन्धित समस्त विषयों का (सामाजिक, बौद्धिक, आर्थिक, राजनीतिक और धार्मिक विषयों का भी) विचार करता है, जिसके साथ ही साथ वह ~~नाग~~ नागरिक के अतीत, वर्तमान, भविष्य, स्थानीय, राष्ट्रीय एवं विश्वव्यापी पहलुओं का भी विश्लेषण करता है।"

— डा० ई० एम० व्हाइट

सृष्टि के अन्य प्राणियों की अपेक्षा मनुष्य ने अत्यधिक उन्नति की है। उसकी इस उन्नति को देख कर यह प्रश्न उठता है कि अन्य प्राणियों की अपेक्षा ~~अधि~~ शारीरिक शक्ति में निर्बल होते हुए भी वह इतनी उन्नति क्यों कर सका? इस प्रश्न का उत्तर बहुत सीधा है — मनुष्य की प्रकृति ने जहाँ एक और विवेक ... है वहीं दूसरी ओर ~~सामा~~ सामाजिक

और सामूहिक जीवन व्यतीत करने की स्वाभाविक प्रवृत्ति प्रदान की है। सामाजिक जीवन ने मनुष्य को प्रथम तो सुरक्षा एवं सुनिश्चितता प्रदान की, और द्वितीय श्रम विभाजन-पद्धति ने मनुष्य को विभिन्न क्षेत्रों में प्रयोग करने का अवसर प्रदान किया, इन प्रयोगों के बल पर उसने युगों के अभ्यास से मनुष्य को सामाजिक जीवन का इतना आदी बना दिया है कि जन्म से लेकर मृत्यु तक उठते-बैठते, चलते-फिरते रवाते, व्यवसाय करते उसे समाज की सहायता की आवश्यकता पड़ती है। मनुष्य में यदि सामाजिक जीवन व्यतीत करने की स्वाभाविक ~~प्रति~~ प्रवृत्ति न होती, तो सभ्यता, विज्ञान, कला, आदि के क्षेत्र में वह इतनी उन्नति तो क्या कदाचित अपना अस्तित्व भी सुरक्षित न रख पाता।

सहयोग और सद्भाव ही सामाजिक जीवन के आधार हैं। किन्तु इसका अर्थ ~~यह भी~~ कदापि नहीं कि सामाजिक जीवन में संघर्ष

और कहता है कि यहाँ समाज में प्रारम्भ से ही
संघर्ष था और आज भी है।

শ্রীশ্রী কালী তারা সহায়

ভূগোল-কথা, চতুর্থ ভাগ

## প্রথম অধ্যায়

### উত্তর আমেরিকা মহাদেশ

(ক) অবস্থান ও আয়তন

উত্তর সুমেরু মহাসাগর, পূর্বে ও দক্ষিণে আটলান্টিক মহাসাগর, পশ্চিমে প্রশান্ত মহাসাগর দ্বারা বেষ্টিত। এই ~~মহাসাগরের~~ মহাদেশটির ও আকৃতি ত্রিভুজের ন্যায়। ইহা উত্তরে প্রশস্ত এবং দক্ষিণে সঙ্কীর্ণ পানামা যোজক দ্বারা ~~বর্তমানে~~ ইহা দক্ষিণ আমেরিকার সহিত সংযুক্ত। ইহা যোজকের মধ্যে দিয়া বর্তমানে পানামা ~~যোজক~~ খাল কাটিয়া আটলান্টিক মহাসাগরকে প্রশান্ত মহাসাগরের সহিত যুক্ত করা হইয়াছে। উত্তর পশ্চিমে ৩৬ মাইল প্রশস্ত বেরিং প্রণালী দ্বারা ইহা এশিয়া হইতে বিচ্ছিন্ন। এই মহাদেশ ৮৩° উঃ অক্ষাঃ [illegible] পর্যন্ত প্রায়

श्री गणेशाय नमः

सिन्दूरुणविग्रहां त्रिनयनां

माणिक्य मौलिस्फुरत्

तारानायकशेखरां स्मितमुखीम

ॐ

तन्त्रसार:

सानुवाद

तन्त्रसार:

प्रथम परिच्छेद:

ॐ नम: गणेशाय

अथ मंगलाचरणं ग्रन्थसूचना च

नत्वा कृष्णपदं द्वन्द्वं ब्रह्मादिसुरवन्दितम्
गुरुञ्च ज्ञानदातारं कृष्णानन्देन धीमता ॥१॥
तत्तद्ग्रन्थगताख्यानार्थं प्रतिपद्य च
सौकर्यार्थिनां संक्षेपात्तन्त्रसार: प्रतन्यते ।
उच्यते प्रथमं तत्र लक्षणं गुरुशिष्ययो: ॥२॥

अथ गुरुलक्षणम्

शान्तो दान्त: कुलीनश्च विनीत: शुद्धवेशवान् ।
शुद्धाचार: सुप्रतिष्ठ: शुचिर्दक्ष: सुबुद्धिमान् ॥३॥
आश्रमी ध्याननिष्ठश्च तन्त्रमन्त्रविशारद: ।
निग्रहानुग्रहे शक्तो गुरुरित्यभिधीयते ॥५॥

आगमसंहितायाम् :—

उद्धर्तुं चैव संहर्तुं समर्थो ब्राह्मणोत्तम: ।

तपस्वी सत्यवादी च ग्रहस्थो गुरुरुच्यते ॥5॥

अथ माहात्म्य -

ज्ञानार्णवे गुरौ मानुष बुद्धिन्तु मंत्रे चाक्षर बुद्धिकम् ।
प्रतिमासु शिलाबुद्धिं कुर्वाणो नरकं व्रजेत ॥6॥
जन्महेतू हि पितरौ पूजनीयौ प्रयत्नतः ।
गुरुर्विशेषतः पूज्यो धर्माधर्मप्रदर्शकः ॥7॥
गुरुः पिता गुरुर्माता गुरुर्देवो गुरुर्गतिः ।
शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ॥8॥
गुरोर्हितं प्रकर्त्तव्यं वांमनः कायकर्मभिः ।
अहिता चरणाद्देवि विष्ठायां जायते कृमिः ॥9॥

~~गुरोर्गुरुतरो नास्ति संसारे दुःख सागरे~~ ।
~~[illegible]~~ ॥

शरीरदः पिता देवी ज्ञानदो गुरुरेव च ।
गुरोर्गुरुतरो नास्ति संसारे दुःख सागरे ॥10॥
यस्य वक्त्राद्विनिर्यातं पूर्णब्रह्ममयं वपुः ।
तारयन्ताव संदेहो नरकार्णवतो ध्रुवम् ॥11॥

मंत्रत्यागाद्भवेन मृत्यु गुरुत्यागाद्दरिद्रताम् ।
गुरुमंत्रपरित्यागी रौरवं नरकं व्रजेत् ॥ २॥
गुरौसान्निहिते यस्य पूजयेदन्यं देवताम् । ।३॥
श्रीक्रमे उत्पादक ब्रह्म दात्रोर्गरीयान् ब्रह्मदः पिता ।
तस्मान्मन्येत सततं पितुरप्याधिकं गुरुम् ॥ ४॥
गुरुवद् गुरुपुत्रेषु गुरुवत्कलत्रादिषु ॥
गुरुवत् पूजनं कार्यं तोषणं वाक्यपालनम् ॥ ५॥
गुरुवत्पूजनं कार्यं सर्वदा गुरुसन्ततौ ॥ ६॥
निगमकल्पद्रुमे —
अविद्यो वा सविद्यो वा गुरुरेव च दैवतम् ।
अमार्गस्थोऽपि गुरुरेव सदागतिः ॥ ७॥
आयान्तमग्रतो गच्छेद् गच्छन्तं तमनुव्रजेत् ।
आसने शयने वापि न तिष्ठेद् अग्रतो गुरोः ॥ ८॥
अनुज्ञां प्राप्य तिष्ठेच्च नैव शायपवानुपात् ॥ ९॥
तथा क्रियासारे —
गुरुर्माता पिता स्वामी बान्धव सुहृदः शिवः ।
इत्याधाय मनोनित्यं भजेत् सर्वात्मना गुरुम् ॥ १०॥

अथ निन्द्य गुरु लक्षणम् क्रियासारसमुच्चये।—

श्वित्री चैव गलत्कुष्ठी नेत्ररोगी च वामनः।
कुनखी श्यावदन्तश्च स्त्रीजितश्चाधिकाङ्गः॥ २१॥
हीनाङ्गः कपटी रोगी बह्वाशी बहुजल्पकः।
एतैर्दोषैर्विमुक्तो यः स गुरुः शिष्य सम्मतः॥ २२॥

आगमे—

अप्रशस्तमपुत्रञ्च दम्भं कितवं तथा।
क्रियाहीनं शठञ्चापि वामनं गुरु निन्दकम्॥ 23॥
जलस्फुविकारंच वर्जयेन्मतिमान् सदा।
सदामत्सर संयुक्तं गुरुं तन्त्रेण वर्जयेत्॥ 24॥

वैशम्पायनसंहितायाम् —

अपूर्णो मृतपुत्रश्च कुष्ठी च वामनस्तथा।
इत्यास्याापि बोधयामि॥ 25॥

अथ शिष्य लक्षणम्—

शान्तो दान्तः सुद्धात्मा श्रद्धावान् धारणक्षमः।
समर्थश्च कुलीनश्च प्राज्ञः सच्चरितो यतिः।
एवमादि गुणैर्युक्तं शिष्यो भवति नान्यथा॥ 26॥

अन्यश्च —

पुण्यवान धार्मिकः शुद्धो गुरौ भक्तो जितेन्द्रियः।
शिष्यो योग्यो भवेत्सोहि सदा ध्यानपरायणः ॥27॥

निषिद्ध शिष्यलक्षणम् —

पापिने क्रूरचेष्टाय शठाय कृपणाय च।
दीनायाचार शून्याय मंत्र द्वेषपराय च ॥28॥
निन्दकाय च मूर्खाय तीर्थद्वेषपराय च।
गुरुभक्तिविहीनाय न देयो मलिनाय च ॥29॥

आगम सार

अलसा मलिना: क्लिष्टा दाम्भिका: कृपणास्तथा।
दरिद्रा रोगिनो रुष्टा रोगिणो भोग लालसा: ॥30॥
असूयामत्सरग्रस्ता सदा पुरुष वादिनः।
अन्यायोपार्जिधना: परदाररताश्च ये ॥31॥
विदुषां वैरिणश्चैव त्याज्या: पंडितमानिन:।
भ्रष्टाचारश्च ये कष्ट वृत्तय: पिशुना खला: ॥32॥
बह्वाशिन: क्रूरचेष्टा दुरात्मानश्च निन्दिता:।
इत्येवमादयोह्यन्येहपि पापिष्ठा: पुरुषाधमा:।
एवं भूता: परित्यज्या: शिष्यत्वेनापि कल्पिता: ॥33॥

6 अथ गुरुशिष्यताविधि —

गुरुसंनिधौ कर्त्तव्याकर्त्तव्यनिरूपणञ्च ।
गुरुता शिष्यता वापि तयोर्वत्सर वासतः ॥ 34 ॥

तथा चोक्तं सारसंग्रहे —

सद् गुरुः स्वाश्रितं शिष्यं वर्षमेकं परीक्षयेत् ॥ 35 ॥
स्वप्ने तु न कालनियमः ।
स्वप्ने तु नियमः न होति नारदवचनात् ॥ 36 ॥

तत्रैव

राज्ञि चामात्यजो दोषः पत्नी पापं स्वभर्तरि ।
तथा शिष्यार्जितं पापं गुरुः प्राप्नोति निश्चितम् ॥ 37 ॥
वर्षैकेण भवेद् योग्यो विप्रो गुण समन्वितः ।
वर्षद्वेन राजन्यो वैश्यस्तु वत्सरैस्त्रिभिः ॥
चतुर्भिर्वत्सरैः शूद्रः कथिता शिष्ययोग्यता ॥ 38 ॥

तारा प्रदीपे —

आगमोक्तविधानेन कलौ देवान् जपेत्सुधीः ।
न हि देवा प्रसीदन्ति कलौ चान्यविधानतः ॥ 39 ॥

तथा —

कृते श्रुत्युक्त मार्गः स्यात् त्रेतायां स्मृतिसम्भवः ।

अपरे तु पुराणोक्तः कल्यागमसम्मतः ॥ ५०॥

असुद्धाः शूद्रकर्म्माणो ब्राह्मणाः कलिसम्भवा ।
तेषामगममार्गेण सिद्धिर्न श्रौतवर्त्मना ॥ ५१॥
यंमणा देवता ज्ञेया देवता गुरुरूपिणी ॥
तेषां भिदा न कर्त्तव्या यदिच्छेच्छुभमात्मना ॥५२॥

देव्यागमे शिववाक्यम् —

गुरुशय्यासनं यानं पादुकेनाद पीठकम् ।
स्नानोदकं तथाच्छायां लंघनं नैव कारयेत ॥५३॥
गुरोरग्रे पृथक् पूजा पौद्धत्यञ्च विवर्ज्जयेत ।
दीक्षां व्याख्यां प्रभुत्वञ्च गुरोरग्रे परित्यजेत ॥५४॥

रुद्रजामले

ऋण दानं तथा दानं वस्तुनाम् क्रयविक्रयम् ।
न कुर्य्याद् गुरुणा सार्द्धं शिष्यो भूत्वा कदाचन ॥५५

गुरुशब्दार्थ ।

तन्त्रार्णवे —

गकारः सिद्धिदः प्रोक्तो रेफः पापस्य दाहकः ।
उकारः शम्भुरित्युक्त स्त्रितयात्मा गुरुः परः ॥५६॥

(8)

गकाराज् ज्ञानसम्पत्ति रेफः पापस्य दाहकः।
~~उकाराच्छिवतादात्म्यं~~ दद्यादिति गुरुः स्मृतः ॥५७॥
गुरुशब्दस्त्वन्धकारः स्याद्रुशब्दस्तन्निरोधकः।
अन्धकारनिरोधित्वाद् गुरुरित्यभिधीयते ॥ ५८॥
अथ आश्रमादिभेदेन गुरुनिर्णयः —
गुरुस्त्वाङ्गभेदेन गुरुं प्राति कर्त्तव्यश्च।
कुलार्णवे उदासीनो ह्युदासीनो वनस्थो वनवासिनः।
पत्नी पति प्राप्तौ गृहस्थानां गुरुर्गृही ॥५९॥
वैष्णवे वैष्णवो ग्राह्यः शैवे शैवस्तथा पुनः।
शाक्ते शाक्तं विद्यादीक्षा स्वामी न संशयः ॥५०॥
गुरुरपि गृहस्थैव कुलार्णवे —
सर्वशास्त्रार्थवेत्ता च गृहस्थो गुरुरुच्यते ॥५१॥
तथा च फले —
कलत्रवान प्रियो दयालुः धर्मसम्मतः।
देवपित्रहरिभक्ते च गृहस्थो देशिको भवेत् ॥५२॥
कुलचूडामणौ —
पितृ मातृ तथा भ्रातृ (पितृभ्यो) पितृभ्यो मातुलस्तथा।

येनो पादपृष्ठस्तब्धो हास्येन तं गुरुं समुपासयेत् ॥53॥

न च बालो न वृद्धश्च न रुग्णो क्रूरस्तथा।
इति हयग्रीवीयं (हयग्रीवीयात्) ॥54॥

तथा च नित्यानन्दे —
गुरुं न व्यक्तयुं वृद्धोत् यदि बुद्धोत् तस्य तु।
कदाचिद् भवेत् सिद्धिर्न मन्त्रैनैव पूजनैः ॥55॥

तथा —.
एकग्रामवास्थितः शिष्यास्त्रि सन्ध्यं प्रणमेद्गुरुम्।
यदि क्रोशयामास्थितो गत्वा गुरुं प्रतिदिनं नमेत् ॥56॥
अर्द्धयोजनतः शिष्यः प्रणमेत् पञ्चपर्वसु।
एकयोजनमारभ्य योजन द्वादशावधि ॥57क)
दूरदेशास्थितः शिष्यो भक्त्या तत्सन्निधिं गतः।
तत्र योजन संख्योक्त मासने प्रणमेद् गुरुम् ॥57॥ख॥
यदि दूरे च पार्वादि स्वगुरो नगरे भवेत्।
वर्षे - वर्षे च कर्त्तव्यं गुरोश्चरण वन्दनम् ॥58॥.
सैव एकदा दक्षिणायने एकदा उत्तरायणे कर्त्तव्यम् (59)

अथ पित्रादितो मंत्र निषेधः —

योगिनी तंत्रे-

पितुर्मंत्रं न गृह्णीयात् तथा माता महस्य च ।

सोदरस्य कनिष्ठस्य वैरिपक्षाश्रितस्य च ॥ 60 ॥

गणेश विमर्षिण्याम् —

यतेर्दीक्षा पितुर्दीक्षा दीक्षा च वनवासिनः ।

विविक्ताश्रमिणो दीक्षा न सा कल्याणदायिका ॥ 61 ॥

रूद्र जामले —

न पत्नीं दीक्षयेद् भर्त्ता न पिता दीक्षयेत्सुताम् ।

न पुत्रञ्च तथा भ्राता भ्रातरं न च दीक्षयेत् ॥ 62 ॥

सिद्धमंत्रो यदि पतिस्तदा पत्नीं स दीक्षयेत् ।

शक्तित्वेन वरारोहे न च सा पुत्रिका भवेत् ॥ 62/5 ॥

इत्यादि निषेधवचनादेभ्यो मंत्रं न गृह्णीयात् इदन्तु

सिद्धेतरविषयम् ।

सिद्धमंत्रे न दुष्यतीति वचनात् ॥ 63 ॥

यतेरपि दीक्षोक्ता शक्तिजामले —

तीर्थचारयुतो मंत्री ज्ञानवान् सुसमाहितः ।

नित्यनिष्ठो यतिः ख्यातो गुरुः स्याद्गौति कोऽपि च ॥ 64 ॥

तथा सिद्ध जामले —

पौदभाग्यवशेनैव सिद्धविद्यां लभेत प्रिये।
तदैव तान्त दीक्षेत त्यक्त्वा गुरुविचारणम्॥ 65 ॥

तथा —

प्रमादाच्च तथाज्ञानात पितुर्दीक्षां समाचरेत।
प्रायश्चित्तं ततः कृत्वा पुनर्दीक्षां (पुनर्दीक्षां) समाचरेत।

पितुरित्युपलक्षणम् —

तथा मातामहादीनामपि।

प्रायश्चित्तन्त्त अयुतसावित्रीजपः सर्वत्र दर्शनात्॥66॥

शङ्कः —

दशसाहस्रजापेन सर्वकल्मषनाशिनी। 67॥

तथा मत्स्यसूक्ते —

निर्वीर्याच्च पितुर्मन्त्रं शैवे शाक्ते न दूष्यतीति वचनं
कौलिकमन्त्रदीक्षापरम्।

अत्र हेतुः योगिनी तन्त्रे —

शक्त्यादिविद्यामधिकृत्य दीक्षानिषेधात्।
यथा शाक्ते तारादिविद्यायां मत्स्यसूक्ते तत्प्रति
पादनात्।

तथा च निजकुलातिलकाय ज्येष्ठपुत्राय दद्यादित्यादि ||68||

श्रीक्रमेहापि —

मनुर्व्विमृष्य दातव्यो ज्येष्ठपुत्राय धीमते ।
महातीर्थे उपरागे सति सर्वत्र न दोषः || 69 ||

तथा च विष्णुमंत्रमाधिकृत्य —

साधु पृष्टं त्वया विप्र वक्ष्यामि सकलन्तव ।
ब्रह्मणा कथितं पूर्व्वं वसिष्ठाय महात्मने || 70||
वसिष्ठोहापि स्वपुत्राय यतिपत्ये दत्तवान स्वयम् ।
प्रसन्नहृदयः स्वच्छः पिता मे करूणानिधिः || 71 ||
कुरुक्षेत्रे महातीर्थे सूर्य्यपर्व्वाणि दत्तवान् । (72)
इत्यादि वैशम्पायनसंहितायां शौनकः प्रति व्यासवचनम् ।
योगिनीतंत्रे निर्व्वापकश्च पितुर्वापि तथा मातामहस्य च ।
स्वप्नलब्धं स्त्रिया दत्तं संस्कारेणैव शुध्यति || 73 ||

मन्तु —

साध्वी चैव सदाचारा गुरुभक्ता जितेन्द्रिया ।
सर्व्वमंत्रार्थतत्वज्ञा सुशीला पूजने रता: ।
गुरुयोग्या भवेत् सा हि विधवा परिवर्जिता ।

स्त्रिया दीक्षा शुभा प्रोक्ता मातुश्चाष्टगुणाः स्मृताः ।
इदन्तु गुरुस्रुपासितमंत्र परम् ॥ 74 ॥
तथा भैरवीतन्त्रे —
स्त्रीपमंत्रोपदेशे तु न कुर्याद् गुरुचिन्तनम् ॥ 75 ॥
मातुरित्युपासिते हष्टगुणम् ।
अनुपासित शुभफलदमित्यर्थः ।
सिद्धमंत्रविषयेष्वेति केचित् ।
वस्तु तस्तु स्त्रीपदं विधवापरम् ।
योगिनी तंत्रे एकवाक्यवलात् ॥ 76 ॥
विधवायाः सुतादीक्षात कन्यायाः पितुराज्ञया ।
नाधिकारो यतो नार्याः सधवा भर्तुराज्ञया ।
नाधिकार इति स्वात तंत्रोण्याधिकारस्य ॥ 77 ॥
स्त्रीणां गर्भनाश्च दीक्षायां नैव दूषणम् ।
न कुर्याद्दूराभे मासि कृत्वा च नारकी भवेत् ॥ 78 ॥
स्वप्नलब्धमंत्रो यदि सद्गुरुं प्राप्नोति
तदा तत एव तन्मंत्रं गृह्णीयात् नोचेत् नोवत् जल
पूर्णकलशे गुरोः प्राण प्रतिष्ठां विधाय, वटपत्रे

कुंकुमेन लिखितं मंत्रं तत् कलसे प्रक्षिप्य, उत्तोल्य मंत्रं गृह्णीयादित्यर्थः। ॥३९॥

तथा हि स्वप्ने लब्धे च कलसे गुरोः प्रणाम्निवेशयेत्।
वटपत्रे कुंकुमेन लिखित्वा ग्रहणं शुभम्।
ततः सिद्धिमवाप्नोति चान्यथा विफलं भवेत्।
इदन्तु गुरोरभावे, तत्सत्वे तस्मादेव मंत्रं गृह्णीयात्।
स्वप्ने तु नियमो न होति नारदवचनात्।
तत्र सिद्धादिनियमो नास्ति ॥ ४० ॥

तत्र विद्याधराचार्यधृतं जाबालवचनम्—
मध्यदेशकुलोद्भूतै- नाटकांकनसम्भवाः।
अन्तर्वेदिप्रतिष्ठाना आवन्त्याश्च गुरू उत्तमाः।
मध्यदेशे आर्यावर्तः ॥ ४१ ॥

गौड़ाः शाल्वाः सुराश्चैव मगधाः केरलास्तथा।
कोशलाश्च दशार्णाश्च गुरवः सप्त मध्यमाः।
कर्णाटनर्मदा रेवाकच्छास्थौ सेन्धवास्तथा।
कालिङ्गाश्च कलम्बाश्च काम्बोजाश्चाधमा मताः ॥४२॥

अथ दीक्षा विचारादि- निर्णय:—

दीक्षा विना जपस्य इष्टत्वात् प्रथमं सा निरूप्यते-
दिव्यं ज्ञानं यतो दद्यात् कुर्यात् पापस्य संक्षयम्।
तस्माद्दीक्षेति सा प्रोक्ता मुनिभिस्तंत्रवेदिभिः ॥83॥
सर्व्वाश्रमेषु दीक्षायां आवश्यकत्वम्।

तथा च

दीक्षा मूलं जपं सर्व्वं दीक्षा मूलः परः तपः।
दीक्षामाश्रिता निवसेदयत्र कुत्राश्रमे वसन् ॥84॥
अदीक्षा ये कुर्व्वन्ति जपपूजादिकाः स्त्रियाः।
न भवन्ति प्रिये तेषां शिलायामुप्तबीजवत् ॥85॥
देवी दीक्षाविहीनस्य न सिद्धिर्न न सद्गतिः।
तस्मात् सर्व्वप्रयत्नेन गुरुणा दीक्षितो भवेत् ॥86॥
अदीक्षितोऽपि मरणे रौरवं नरकं व्रजेत्।
अदीक्षितस्य मरणे पिशाचत्वं न मुञ्चति (मुच्यते)॥
तस्मादीक्षां प्रयत्नेन सदा कुर्य्याच्च तांत्रिकीम् ॥87॥
तथा च नवरत्नेश्वरे—
सर्व्वाश्रमेऽपि दीक्षायां मुनिः कल्पम् खंडितम्।

(16)

अविरोधात्कृतवन्त्येव प्रासङ्गिक्यस्तु मुक्तये ॥ ८८ ॥

उपपातकलक्षाणि महापातककोटयः ।
क्षणाद्दहति देवेशि दीक्षा हि विधिना कृता ॥ ८९ ॥

कल्पे दृष्ट्वा तु मंत्रं वै यो गृह्णाति नराधमः ।
मन्वन्तरसहस्रेषु निष्कृतिर्नैव जायते ॥ ९० ॥

नाद्धाक्षितस्य कार्यं स्यात् तपोभिर्नियमव्रतैः ।
न तीर्थगमनेनापि न च शारीरयन्त्रणैः ॥ ९१ ॥

मत्स्यसूक्ते —
अदीक्षितानां मर्त्यानां दोषं शृणु वरानने ।
अन्नं विष्ठासमं तस्य जलं मूत्रसमं स्मृतम् ॥ ९२ ॥

तत्कृतं तस्य वा श्राद्धं सर्वं याति ह्यधोगतिम् ।
अतः- सद्गुरोराहिता दीक्षा सर्वकर्माणि साधयेत् ॥ ९३ ॥

## शूद्रस्य निषिद्ध मन्त्राः —

तंत्रान्तरे —

प्रणवाद्यं न दातव्यं मंत्रं शूद्राय सर्वथा ।
आत्मतां गुरोर्मतं मंत्रं जपसंज्ञकम् ॥ ९४ ॥

स्वाहा[illegible] शूद्रे मंत्रं ददद्गुरुः ।

शूद्रो निरयमाप्नोति ब्राह्मणो यात्यधोगतिम् ॥ ९५ ॥

श्रुतिरपि —

सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्री शूद्रो यदि जानीयात्
स मृतो ह्यधोगच्छति ॥ ९६ ॥

विशेषमाह वाराहीये —

गोपालस्य यजुर्दीयो महेस्य च पादजे ।
तत्पत्न्याश्चापि सूर्यस्य गणेशस्य मनुस्तथा ।
एषां दीक्षाधिकारी स्यादन्यथा पापभाग भवेत् ॥ ९७ ॥

अथ मंत्राणां सिद्धादिविचारः —

तत्राप्यनुकूलं मंत्रं दीक्षयेत् ।
मननात्त्रायते यस्मात्तस्मान्मन्त्रः प्रकीर्तितः ॥ ९८ ॥

तथा च —

स्वतारराशिकोष्ठानामनुकूलान् भजेन्मनून् ॥ ९९ ॥

सिद्धसारस्वते

नृसिंहार्कवराहाणां प्रसादप्रणवस्य च ।
सपिण्डाक्षरमंत्राणां सिद्धादिर्नैव शोधयेत् ॥ १०० ॥

कौलचक्रे ।

ताराचक्रं सासशाशिचक्रं नामचक्रं तथैव च ।
तत्र चेत् सद्गुणो मन्त्रो नान्यचक्रं विचिन्तयेत् ।
इति तु प्रधानतया बोद्धव्यम् ॥ १ ॥

तथा च —
धनिमंत्रं न गृह्णीयादकुलञ्च तथैव च ।
इत्यादौ तथादर्शनात्तत्तच्चक्रविचारस्यावश्यकत्वात् तन्निरुप्यते ।

स्वप्ने लब्धे स्त्रिया दत्ते मालामंत्रे च त्र्यक्षरे ।
वैदिकेषु च सर्वेषु सिद्धादीन्नैव शोधयेत् ॥ २ ॥

मालामंत्रस्तु वाराहीये —
विंशत्यर्णाधिका मंत्रा मालामंत्राः प्रकीर्तिताः ॥ ३ ॥

नपुंसकस्य मंत्रस्य सिद्धादीन्नैव शोधयेत् ।
हंसस्याष्टाक्षरस्यापि तथा पंचाक्षरस्य च ।
एक-द्वि-त्र्यादिबीजस्य सिद्धान्नैव शोधयेत् ।

तथा —
एकाक्षरस्य मंत्रस्य मालामंत्रस्य पार्वति ।
वैदिकस्य च मंत्रस्य सिद्धादीन्नैव शोधयेत् ॥ ५ ॥

पुंमंत्रा लुँफड़न्ता: स्त्र्यर्द्ध ठान्तास्तु स्त्रियः मता:।
नपुंसका नमोऽन्ता: स्युः तु एते मनवस्त्रिधा॥5॥
मालिनीविजये -
अथ वक्ष्ये प्रियाहं याया महाविद्या महीतले -
दोषजातैः संस्पृष्टास्ता: सर्वा हि फलै: सह।
काली नीला महादुर्गा त्वरिता छिन्नमस्तिका।
वाग्वादिनी चान्नपूर्णा तथा प्रत्यङ्गिरा पुनः।
कामाख्यावासिनी बाला मातङ्गी शैलवासिनी।
इत्याद्या: सकला: देव्य: कलौ पूर्णफलप्रदा:॥6॥
~~तथा च मुण्डमालातंत्रे~~ -
सिद्धमंत्रतया नात्र युगसेवापरिश्रम:।
तथा चैता महाविद्या: कलिदोषान्न बाधिता:॥7॥
तथा च मुंडमालातंत्रे —
काली तारा महाविद्या षोडशी भुवनेश्वरी।
भैरवी छिन्नमस्ता च विद्या धूमावती तथा॥
बगला सिद्धविद्या च मातङ्गी कमलात्मिका।
एता दश महाविद्या: सिद्धविद्या: ~~प्रकीर्तिता:~~ प्रकीर्तिता:॥

मा

नात्र सिद्धाद्यपेक्षास्ति नक्षत्रादिविचारणा ।
कालादिशोधनं नास्ति नारिमित्रादि दूषणं ॥
सिद्धविद्यातया नात्र युग सेवा परिश्रम: ।
नास्ति किञ्चिन्महादेवी दु:खसाध्यं कदाचन ॥
इत्यादि वचनादेषु विचारो नास्ति ।
वस्तुतस्तु इदं प्रशं सापरम् ॥
सर्वत्र विचारस्यावश्यकत्वात् दुरदृष्टवशात् कदाचिद्वैरी मंत्रस्य स्वप्नादौ प्राप्त्या तद्दोषस्य दृष्टत्वादिति सम्प्रदायिक ।

एवं कुलाकुलचक्रम् —

कुलाकुलस्य भेदं हि वक्ष्यामि मंत्रिणामिह ।

~~तथा विवेके~~ तथा विवेके —

वाय्वग्नि- भूजलाकाशा: पंचाशल्लिपय: क्रमात् ।
पञ्च ह्रस्वा पञ्चदीर्घा विन्दवन्ता: सन्धिसम्भवा: ।

| वायू | अग्नि | भू | जल | आकाश |
|---|---|---|---|---|
| अ आ | इ ई | उ ऊ | ऋ ॠ | ऌ ॡ |
| ए | ऐ | ओ | औ | अं |
| क | ख | ग | घ | ङ |

| वायु | अग्नि | भू | जल | आकाश |
|---|---|---|---|---|
| च | छ | ज | झ | ञ |
| ट | ठ | ड | ढ | ण |
| त | थ | द | ध | न |
| प | फ | ब | भ | म |
| य | र | ल | व | श |
| ष | स | ह | क्ष | ं |

कादयः पञ्चशः पक्षलसहन्ताः प्रकीर्तिताः ।

अ आ ए क च ट त प य ष मारुताः ।

इ ई ऐ ख छ ठ थ फ र क्ष आग्नेयाः ।

उ ऊ ओ ग ज ड द ब ल ळ पार्थिवाः ।

(४)। ऋ ॠ औ घ झ ढ ध भ व स वारुणाः ।

ऌ ॡ अं ङ ञ ण न म श ह नाभसाः ।

साधकस्याक्षरं पूर्वं मन्त्रस्यापि तदक्षरम् ।

यद्येकभूतदैवत्यं जानीयात् स्वकुले हितम् ।

भौमस्य वारुणं मित्रं आग्नेयस्यापि मारुतम् ।

मारुतं पार्थिवानां च आग्नेयाश्चान्तसां रिपुः ।

पार्थिवानाम्बाति चकारात् आग्नेयं पार्थिवानां रिपुः ।

नाभसं सर्वमित्रं स्याद्विरुद्धं नैव शीलयेत् ।

तथा च रुद्रयामले —

[illegible] ।

ऐन्द्र वारुणयोः शक्रस्मारुतः परिकीर्त्तितः।

इति राघवभट्टधृतवचनात् जलमारुतयोः शत्रुता॥१॥

अथ राशिचक्रम्।

तथा च कल्पद्रुमे—

रेखा त्रयं पूर्वपरेण कुर्यात्तन्मध्यतो याम्य कुबेरभेदात्।

रुद्रेशकमीशाननिशाकरे तु, भुताशवाद्ये विलिखेत्ततो हर्णान्।

पञ्चेषु वाणाशपरस्य चतुष्कपार्णान् ॥

मेषादितः प्रविलिखेत् सकलांस्तु वर्णान्,

कन्यागतान् प्रविलिखेदथ शादिवर्णान्।

तेन अ आ इ ई मेषः। उ ऊ ऋ वृषः।

ॠ ऌ ॡ मिथुनः। ए ऐ कर्कटः।

ओ औ सिंहः। अं अः श ष स ह ळ क्षाः कन्या।

कवर्गस्तुला। चवर्गो वृश्चिकः। टवर्गो धनु।

तवर्गो मकरः। पवर्गो कुम्भः। यवर्गो मीनः।

स्वराशिनामनुकूलं मंत्रं भजेत्।

तथा च स्वतारराशिकोष्ठानामनुकूलान् भजेन्मनूनिति



[illegible]वचनात्।

राशिनाम युक्ता ज्ञेया सजेच्छेत्वं मृतं धनम् ।
स्वराशिम्मंत्रराश्यन्तं गणनीयं विचक्षणैः ।
यदातु स्वराशेरंशान्तं तदा साधकनामाद्यक्षरसम्बन्धिनं
राशिं गृहीत्वा गणयेत् ॥ १० ॥

नारायणीये—

अज्ञाते राशिनक्षत्रे नामाद्यक्षरदर्शनात् ।
साध्यस्याक्षरराश्यन्तं गणयेत् साधकाक्षराद् इति राघव
न कन्द्रिकाभृत्वाच्च ॥ ११ ॥

तन्त्रराजे —

तेनं मंत्राद्यवर्णेन नाम्नश्चाद्यक्षरेण च ।
गणयेद्यदि षष्ठं वाप्यष्टमं द्वादशस्तु वा ।
रिपुर्मंत्राद्यवर्णं स्यान्तेन तस्यादिनं भवेत ॥१२॥

रामार्चनचन्द्रिकायाम —

एकुपञ्च नवबान्धवाः स्मृताः द्वौ च षष्ठः दशमश्च सेवकाः ।
बाहि रुद्र भुवयस्तु पोषका द्वादशाष्ट चतुरस्तु घातकाः ॥
चतुरस्तु घातका इति विष्णुविलक्षम ।
रामार्चनचन्द्रिकाभूतत्वाच्च ॥१३॥
शत्रुस्थानो षष्ठं वर्जयेत ।
षष्ठाष्टम द्वादशानी वर्जयावि नोपानि फलत इति वचनात
वेदशाजस्वरस्याच्च ॥१४॥

तन्त्रान्तरे —

द्वादशराशिनामधेयं संज्ञा नाम्नानुरूपं फलम ।
लग्नं धनं भ्रातृबन्धु - पुत्र शत्रु - कलत्रकम ।
मरणं धर्मकर्माय व्ययो द्वादशराशयः ।
नामानुरूपमेतेषां शुभाशुभ फलं लभेत ।
[illegible]

लग्ने सिद्धिस्तथा नित्यं धने धनसमृद्धिदम् ।
भ्रातरि भ्रातृवृद्धिः स्याद्बान्धवे बान्धव प्रियः ।
पुत्रे पुत्रविवृद्धिः स्याच्छत्रौ शत्रुखण्डनम् ।
कलत्रे मध्यमा प्रोक्ता मरणे मरणं भवेत् ।
धर्मे धर्मविवृद्धिः स्यात् सिद्धिदः कर्मसंस्थितः ।
आये च धनसम्प्राप्तिर्व्यये च सञ्चितव्ययः ॥ १६ ॥

~~नक्षत्र चक्रम्~~

# नक्षत्रचक्रम्

| अश्विनी | भरणी | कृत्तिका | रोहिणी | मृगशिरा | आर्द्रा | पुनर्वसु | पुष्य | अश्लेषा |
|---|---|---|---|---|---|---|---|---|
| अ आ | इ | ई उ ऊ | ऋ ॠ ऌ ॡ | ए | ऐ | ओ औ | क | ख ग |
| देव: | मानुष: | राक्षस: | मानुष | देव: | मानुष | देव | देव: | राक्षस: |

| मघा | पूर्वफाल्गुनी | उत्तरफाल्गुनी | हस्ता | चित्रा | स्वाती | विशाखा | अनुराधा | ज्येष्ठा |
|---|---|---|---|---|---|---|---|---|
| घ ङ | च | छ ज | झ ञ | ट ठ | ड | ढ ण | त थ द | ध |
| राक्षस: | मानुष: | मानुष: | देव: | राक्षस: | देव: | राक्षस: | देव: | राक्षस: |

| मूला | पूर्वाषाढा | उत्तराषाढा | श्रावण | धनिष्ठा | शतभिषा | पूर्वभाद्र | उत्तरभाद्र | रेवती |
|---|---|---|---|---|---|---|---|---|
| न प फ | ब | भ | म | य र | ल | व श | ष स ह | क्ष अं अः |
| राक्षस: | मानुष: | मानुष: | देव: | राक्षस: | राक्षस: | मानुष: | मानुष: | देव |

अथ नक्षत्रक्रम =

अ आ अश्विनी देव । ई भरणी मानुषः । ई उ ऊ कृत्तिका राक्षसः । ऋ ॠ ऌ ॡ रोहिणी मानुषः । ए मृगशिरो देवः । ऐ आर्द्रा मानुषः । ओ औ ख ग अश्लेषा राक्षसः । घ ङ मघा राक्षसः । च पूर्वाफाल्गुनी मानुषः छ ज उत्तराफल्गुनी मानुषः । झ ञ हस्ता देवः । ट ठ चित्रा राक्षसः । ड स्वाती देवः । ढ ण विशाखा राक्षसः । त थ द अनुराधा देवः । थ ध धनिष्ठा राक्षसः । प शतभिषा राक्षसः । ब श पूर्वाभाद्रपदा मानुषः । ष स ह उत्तरभाद्रपदा मानुषः । अं अः क्ष रेवति देवः ।

वृषचक्रक्रम —

उत्तराद्दक्षिणाग्रान्तु रेखां कुर्याच्चतुष्टयीम् ।
दशैरेखाः पश्चिमाः स्युः कर्त्तव्या वीरवन्दिते ।
अश्विन्यादिक्रमेणैव विलिखेत्तारकाः पुनः ॥ ११ ॥
अकारादि - सकारान्तान् क्लीन्चन्द्र बालि देवकान् ।
मुमिन्दु - नेत्रचन्द्राश्च अश्लेषान्तां स्वर्गाप्रिये ।

द्विभुनेत्र- नेत्रयुग्मनांश्चेन्दुनेत्राग्नि युग्मकान् ।
मघादि कार्ता जेष्ठान्तं द्वितीयं नव तारकम् ।
वह्नियुमीन्दुचन्द्रांश्च युग्मेन्दुनेत्र वह्निकान् ।
वेदेन भेदितान् वर्णान् रेवत्यन्तं गतां क्रमात् ॥१८॥
तथा च निबन्धे —
पूर्वोत्तर त्रयश्चैव भरण्यार्द्रा च रोहिणी ।
इमानि मानुषान्याहुर्हि आणी मघे मनीषिणः ॥१९॥
ज्येष्ठा शतभिषा मूला धनिष्ठाश्लेषा कृत्तिका ।
चित्रा मघा विशाखा स्फुस्तरा राक्षसदेवता ॥२०॥
अश्विनी रेवति पुष्या स्वाती हस्ता पुनर्वसुः ।
अनुराधा मृगशिरा श्रवणा देवतारका ॥ २१ ॥
तथा —
स्वजातौ परमप्रीतिर्मध्यमा भिन्नजातिषु ।
रक्षोमानुषयोर्नाशो वैरं दानव देवयोः ॥२२॥
जन्मसम्पद्विपत् क्षेमप्रत्यारिः साधिको वधः ।
मित्रं परममित्रञ्च जन्मादीनि पुनः पुनः ॥२३॥
~~प्रश्न - तृतीय पञ्चम सप्तमानि~~

जन्म तृतीय पञ्चम सप्तमानि नक्षत्राणि वर्ज्जनीयानि ॥२५॥

तथा च—

रसाष्ट नवमन्त्राणि युगयुग्मगतानि च ।

इतराणि न मन्त्राणि तत्त्याज्यानि मनीषिणा इत्यादि ।

तत्र स्वनक्षत्रादेव नक्षत्रं गणनीयम् ।

स्वनक्षत्राज्ञाने स्वनामाद्यक्षरसम्बन्धिनक्षत्रादेव नक्षत्रं गणनीयम् ।

तथा च

प्रादक्षिण्येन गणयेत् साधकाद्यक्षरात् सुधीः ।

इति वचनात् ॥२६॥

अथ अकथह- चक्रम्—

चतुरस्रे लिखेद्वर्णान् चतुःकोष्ठसमन्विते ।

चतुःकोष्ठे षोडश कोष्ठ इति यावत् ॥२७॥

विश्वसारे—

चतुरस्रं लिखेत् कोष्ठम् चतुःकोष्ठसमन्वितम् ।

पुनश्चतुष्कं तत्रापि लिखेद्धीमान् क्रमेण तु ।

ततः षोडशकोष्ठेषु अकारादि वर्णान् प्रादक्षिण्येन लिखेत् ॥

~~अथ~~ (31)

तत्र क्रमः —

इन्दुग्नि-रुद्र-नव-नेत्र-युगाङ्क-दिक्षु-ऋत्वष्ट षोडश
चतुर्दशभानुकेषु ।
पाताल पञ्चदश वह्नि-हिमांशु कोष्ठे
वर्णान्विलेखलिपिभवान् क्रमशस्तु ~~वर्णान् वर्णान्विलेखलि~~ धीमान् ॥

२८ ॥ नामाद्यक्षरमारभ्य यावन्मन्त्रादिमाक्षरम् ।
चतुर्भिः कोष्ठैरेकमिति कोष्ठचतुष्टयम् ।
पुनः कोष्ठग कोष्ठेषु सव्यतो नाम्न आदितः ।
सिद्धः साध्यः सुसिद्धोऽरिः क्रमाज्ज्ञेया विचक्षणैः ।
सव्यतो दक्षिणतः ॥२९॥

विश्वसारे —

दक्षिणावर्त्तयोगेन कोष्ठे वर्णान् लिखेत् सुधीः ।
येनैव लिखनं कुर्यात्तेनैव गणनं स्मृतम् ॥३०॥

अकथह-चक्रम् —

| अ क थ ह | उ ङ प | आ ख द | ऊ च फ |
|---|---|---|---|
| ऋ ड व | ऐ झ म | औ ढ श | लृ ञ य |
| ई घ न | ऋृ ज भ | इ ग ध | ऋृ छ ब |
| अं त स | ऐ ड ल | अं ण व | ए ट र |

२४॥

सिद्धः सिध्यति कालेन साध्यस्तु जपहोमतः।
सुसिद्धो ग्रहणादेव रिपुर्मूलं निकृन्तति ॥ 31 ॥
तंत्रान्तरे —
सिद्धार्णा बान्धवाः प्रोक्ताः साध्यास्तु सेवकाः स्मृताः।
सुसिद्धाः पोषका ज्ञेयाः शत्रवो घातकाः स्मृताः ॥ 32 ॥
जपेन बन्धुः सिद्धः स्यात् सेवकोऽधिकसेवया।
पुष्णाति पोषकोऽभीष्टं घातको नाशयेद् ध्रुवम् ॥ 33 ॥
सिद्धः सिद्धो यथोक्तेन द्विगुणात् सिद्धसाधकः।
सिद्ध-सुसिद्धोऽर्द्धजपात् सिद्धारिर्हन्ति बान्धवान् ॥ 34 ॥
साध्य-सिद्धो द्विगुणकः साध्य साध्यो निरर्थकः।
तत्सुसिद्धो द्विगुणजपात् साध्यारिर्हन्ति गोत्रजान् ॥ 35 ॥
सुसिद्ध सिद्धोऽर्द्धजपात् तत्साध्यो द्विगुणाधिकारात्।
तत्सुसिद्धो ग्रहादेव सुसिद्धारिः स्वगोत्रहा ॥ 36 ॥
अरिसिद्धः सुतान् हन्यात् अरिसाध्यस्तु कन्यकाः।
तत्सुसिद्धस्तु पत्नीघ्नस्तदरिर्हन्ति साधकम् ॥ 37 ॥
अथ वैरिमंत्रपरित्यागप्रमाणमाह तंत्रे —
गवां द्वीपे [illegible] ... [illegible]।

पीत्वा क्षीरं जपेन्मन्त्रं समुच्चार्य्य सजेत्तथा |
अनेकेनैव विधानेन वैरिमन्त्रादि मुच्यते ॥ ३८ ॥
अरिमन्त्रं विदित्वा तु न पुनः प्रजपेच्च तत् |
तं सन्त्यज्य देवताया स्वरूपा अन्यं भजेन्मनुम् ॥ ३९ ॥
द्रोणपरिमाणं यथा तन्त्रान्तरे पलद्वयन्तु प्रसृतिः कुडवं
तच्चतुष्टयम् |
चतुर्भिः कुडवैः प्रस्थं प्रस्थाश्चत्वार आढकम् |
चतुर्भिराढकैर्द्रोणः कथितो मानवेदिभिः ॥ ४० ॥
प्रकारान्तरमाह स प्रजामते —
वटपत्रे लिखित्वारि मन्त्रं स्रोतसि निक्षिपेत् |
एवं मन्त्र-विमुक्तिः स्यादित्याह भगवान् शिवः ॥ ४१ ॥

## अथ अकडम चक्रम् |

रेखाद्वयं पूर्व्वपरं कुर्य्यात्तन्मध्यतो याम्यकुबेरभेदात्
महेश रक्षोऽधिपति क्रमेण तिर्य्यक् तथा वायुहुताशनेन ॥ ५
अकारादि — क्षकारान्तान् क्लीबहीनान् लिखेत्ततः |
ऋ ॠ वर्णद्वयं लृ ॡ क्लीबं तानि क्लीबं प्रचक्षते ॥ ५३ ॥
एकैकशमतो लेख्यान् मेषादिषु वृषान्तकान् |

गणयेत् क्रमशो मेषु नामादि वर्णपूर्विकान् ।
मेषादितो हि मीनान्तं गणयेत् क्रमशः सुधीः ॥ ५५ ॥
जप्तुः स्वनामतो मंत्री यावन्मंत्रादिमाक्षरम् ।
सिद्ध-साध्य-सुसिद्धारीन् पुनः सिद्धादयः पुनः ॥
नवैकपञ्चमे सिद्धः साध्यः षड् दशयुग्मके ।
सुसिद्धस्त्रिसप्तके रुद्रे वेदाष्ट द्वादशे रिपुः ।
एतन्न कथितं देवि अकडमादिकमुत्तमम् ।

इदन्तु गोपालविषयकमेव ।
गोपालेऽकडमः स्मृत इति वचनात् ॥५८॥
शिवविषयेऽपि —
वैष्णवं राशिसंशुद्धं शैवञ्चाकडमं स्मृतम् ।
इति जामलीयात् ॥५६॥
तथा च वाराहीतन्त्रे —
ताराशुद्धिर्वैष्णवानां कोष्ठशुद्धिः शिवस्य च ।
राशिशुद्धिस्त्रिपुरे च गोपालेऽकडमः स्मृतः ॥५७॥

# अथ अकथहचक्रम् —

## अहपथा —

कोष्ठान्येकादशान्येव वेदैरपूरितानि च ।
अकारादि - हकारान्तान् लिखेत् कोष्ठेषु तत्त्ववित् ॥५८
एवं पञ्चकोष्ठेषु ह्रस्वदीर्घक्रमेण तु ।
द्वयं द्वयं लिखेत्तत्र विचार्य खलु साधकः ।
शेषेष्वेकैकशो वर्णान् क्रमशस्तु लिखेत् सुधीः ॥५९॥
तथा ओं औं स्वरौ
~~युग्म ओं~~ पञ्चसु कोष्ठेषु शेषान् ऋङ्कमेकम् ।


[illegible]

एकैकमेकादश- कोष्ठेषु ।

षट्काल- काल विषदाग्नि समुद्र वेद -रत्नाश्वि-

शून्य दहनाः खलु साध्यवर्णाः ॥५०॥

युग्म-द्वि- पक्ष विषदन्वर- पुष्प शशांक व्योमाब्धि-

वेददशिनः खलु साधकार्णाः ।

नामाक्षमाला दकठवादगजभक्तशेषं

ज्ञात्वा मयोराधिकशेषमृणं धनं स्यात् ॥

अस्यार्थः —

साध्यवर्णान् स्वर व्यञ्जन भेदेन पृथक्कृतान् षट्कालादि-

केगुणितान् कृत्वा तथा साधक. नामाक्षरान् स्वव्यञ्ज-

नरूपेण पृथक्कृतान् युग्माद्यैः केगुणितान् कृत्वा

अष्टसंख्याभिर्हृत्वा क्रमशो साध्यसाधकयोर्यदधिकं

तदृणं यन्न्यूनं तद्धनम् ।

एवं ज्ञात्वा मंत्रं दद्यात् ।

मंत्रश्चेदृणी भवति तदा मंत्रः सुखदो भवति धनी चेन्न तथा ॥

# ऋणी-धनी-चक्रम्।

| ६ | ६ | ६ | ० | ३ | ९ | ५ | ९ | ० | ० | ३ |
|---|---|---|---|---|---|---|---|---|---|---|
| अ आ | इ ई | उ ऊ | ऋ ॠ | ऌ ॡ | ए | ऐ | ओ | औ | अं | अः |
| क | ख | ग | घ | ङ | च | छ | ज | झ | ञ | ट |
| ठ | ड | ढ | ण | त | थ | द | ध | न | प | फ |
| ब | भ | म | य | र | ल | व | श | ष | स | ह |
| २ | २ | ६ | ० | ० | २ | १ | ० | ५ | ५ | १ |

तन्त्रान्तरे —

मंत्रो मध्याधिकांक स्यात्तदा मंत्रं जपेत् सुधीः।
समेऽपि च जपेन्मंत्रं न जपेत्तु ऋणाधिके ॥(ऋणाधिके
शून्ये मृत्यु विजानीयात्तस्मात्तं परिवर्जयेत्)
ऋणाधिके धने ॥ ६२ ॥

तथा -

इन्द्रर्क्षनेत्र रवि पञ्चदशत्तु वेद बक्षापुष्याष्ट
नवाग्निगुणितांश्च साध्यान्।
दिग्-भू-गिरि-श्रुति-गजाग्नि मुनीषु वेद
वह्नि भिस्तु गुणितान्स्व साध्यकार्णान्॥
यदकालत्यादि कन्तु विष्णुविषयं रामार्चनचन्द्रिका
धृतत्वादिति केचित् वस्तुतस्तु पूर्व

स्यैव विवरणादिदम् ॥53॥

यथा च इन्दुवेदनेत्रे इत्याद्यभिधाय नामाणि कोष्ठांक मध्यामि हन्यादेकादि रुद्रांकगतं क्रमेण इति ॥54॥

व्यक्तं रुद्रयामले —

साध्यांकान् साधकाङ्कांश्च पूरयेद् ग्रहसंख्यया ।
गुणिते तु हृते हष्ठाभिर्यच्छेषं जायते स्फुटम् ।
तदंकं कथयाम्यद्य रुकादश गृहास्थितम् ।
इत्युक्त्वा षट्काल - काल इत्युक्तम् ॥55॥

तंत्रार्णवे —

यंत्रो मूर्णी शुभफलदोह्यशुभो धना च,
तुल्यं यदा च सफलः कथितो मुनीन्द्रैः ॥56॥
अन्यच शून्ये मृत्युमवाप्नोति धने च विफलं भवेत् ।
ऋणेन तु प्राप्तिमात्रेण सर्वसिद्धिस्तु जायते ॥57॥

प्रकारान्तरम् —

नामाद्यक्षरमारभ्य पंचमत्रादिमाक्षरम् ।
त्रिवा कृत्वा ~~सप्तभि स्वर्गाङ्के~~ स्वरैर्भिन्नं तदन्याद्विपरीतकम्



अस्यार्थः —

साधकनामाद्यक्षरतो गणनया यावन्मन्त्राद्यक्षरं तत्संख्या भवे

~~यावत्संख्यं सप्तगुणं कृत्वा त्रिभिर्हरेत्~~ ॥

त्रिधा कृत्वा सप्तभिर्हृत्वा आधिक्यं ऋणं शेषं धनं स्या

अन्यदपि मंत्राद्यक्षरमारभ्य यावत् साधकनामाद्यक्षरं

भवेत्, तावत्संख्यं सप्तगुणं कृत्वा त्रिभिर्हरेत् ॥58॥

अन्यच्च पिङ्गलामते —

साध्यनाम द्विगुणितं साधकेन समन्वितम् ।

अष्टाभिश्च हरेच्छेषं तदन्यद्विपरीतकम् ।

अस्यार्थः

साध्यनाम स्वरव्यञ्जनभेदेन द्विगुणीकृत्य साधकनामाक्षरे

स्वव्यञ्जनभेदेन संयोज्य अष्टाभिर्हृत्वा आधिक्यं ऋणं धनं ज्ञेयम्॥

नामग्रहणप्रकारमाह सनत्कुमारीये —

पितृमातृकृतं नाम त्यक्त्वा शर्मादि बोधकान् ।

श्रीवर्णाश्च ततो हित्वा चैकेषु योजयेत् क्रमात् ॥60॥

नामग्रहणप्रकारमाह पिङ्गलायाम् —

प्रसिद्धं यद्भवेन्नाम किंवास्य जन्मनाम च ।

यतीनां पुष्पपातेन गुरुणा यत् कृतं भवेत् ॥61॥

तंत्रान्तरे —

लोकप्रसिद्धमथवा माता पित्रा तथा कृतम् ॥ ६२॥

रुद्रयामले —

सुप्ता जागर्त्ति येनासौ दूरस्थः प्रतिभाषते ।
वदन्यन्यमनस्कोऽपि तन्नाम ग्राह्यमेव च ॥ 63॥

देवताभेदे चक्रविचारस्यावश्यकता ।

वाराही तंत्रे यामलादौ च —

ताराशुद्धिर्वैष्णवानां कोष्ठशुद्धिः शिवस्य च ।
राशिशुद्धिस्त्रैपुरे च गोपाले ह्यकडमः स्मृतः ॥ 64॥
अकडमो रामचन्द्रे गणेशे हरचक्रकम् ।
कोष्ठचक्रं वराहस्य महालक्ष्म्याः कुलाकुलम् ॥ 65॥
नामादिचक्रं सर्व्वेषां भूतचक्रं तथैव च ।
त्रैपुरं तारके चक्रे शुद्धं मंत्रं जपेद्बुधः ॥ 66॥

तथा —

वैष्णवं राशिसंशुद्धं शैवञ्चाकडमं स्मृतम् ।
कालिकायाश्च ताराया स्तारा चक्रं शुभावहम् ॥ 67॥
चण्डिकायास्तार कोष्ठे गोपाले ह्यकडमं स्मृतम् ।
हरिचक्रे सर्व्वमंत्रं [illegible] ॥ 68॥

ऋणाधिक्ये शुभं विद्याविद्याङ्गनाधिक्ये च नो विदिः।
दोषान् संशोध्य गृह्णीयान्मध्यदेशोद्भवस्य च ॥ ६९॥
ऋणी मंत्रं शुभफलो धनी - मंत्रोऽशुभप्रदः।
तुल्यं यदा शुभफलं कथितो मुनिसत्तमैः ॥ ७०॥

अन्यत्रापि —

शून्ये मृत्युमवाप्नोति धने च विफलं भवेत्।
ऋणे च प्राप्तिमात्रेण सर्व्वसिद्धिस्तु जायते ॥ ७१॥

## अथ दीक्षा प्रकरणम् —

गुरुर्दीक्षा पूर्व्वदिने स्वशिष्यमाश्रमं नयेत्।
दर्भशय्यां परिष्कृत्य शिष्यं तत्र निवेशयेत् ॥ ७२॥
स्वापमंत्रेण मंत्रज्ञः शिशोः शिखां प्रबन्धयेत्।
तन्मन्त्रं स्वापसमये पठेत्ज्ञारत्रयं शिशुः ॥ ७३॥
श्रीगुरोः पादुकां ध्यात्वा उपवासी जितेन्द्रियः।
तारो ह्रिलि अयं शूलपाणये ठिठ इत्यतः ॥ ७४॥
वारत्रयं पठित्वा तु उपवासी जितेन्द्रियः।
श्रीगुरोः पादुकां ध्यात्वा शयीत कुशशायने ॥ ७५॥

# अथ दीक्षायां मासनिर्णयः —

मन्त्रारम्भस्तु चैत्रे स्यात् समस्तु पुरुषार्थदः ।
वैशाखे रत्नलाभः स्यात् ज्येष्ठे तु मरणं भवेत् ॥76॥
आषाढे बन्धुनाशःस्यात् पूर्णायुः श्रावणे भवेत् ।
प्राणनाशो भवेद् भाद्रे आश्विने रत्नसंञ्चयः ॥ 77 ॥
कार्त्तिके मन्त्रसिद्धिः स्यात् मार्गशीर्षे तथा भवेत् ।
पौषे तु शत्रु पीड़ा स्यात् माघे मेधाविवर्द्धनम् ॥ 78 ॥
फाल्गुने सर्व्वकामाः स्युर्मलमासं विवर्ज्जयेत् ॥ 79 ॥
चैत्रे इति गोपालविषयं गौतमीये उक्तत्वात् ॥ 80 ॥
मधुमासे भवेद्दीक्षा दुःखाय मरणाय च इति वचनात् नान्यत्र
तत्र मासः सौर एव ।
सौरे मासि भवेद्दीक्षा न चान्द्रे न च तारके ॥ 82 ॥

## अथ दीक्षायां वारनिर्णयः —

रविवारे भवेत् वित्तं सोमे शान्तिर्भवेत् किल ।
आयुरङ्गारके हन्ति तत्र दीक्षां विवर्ज्जयेत् ॥ 83 ॥
बुधे सौन्दर्य्यमाप्नोति ज्ञानं स्यात्तु बृहस्पतौ ।
शुक्रे सौभाग्यमाप्नोति यशोहानिः शनैश्चरे ॥ 84 ॥

# अथ दीक्षायां तिथि निर्णयः —

## आगमकल्पद्रुमे —

प्रतिपदि कृत्वा दीक्षा ज्ञाननाशकरी मता ।
द्वितीयायां भवेज् ज्ञानं तृतीयायां शुचिर्भवेत ॥ 85 ॥
चतुर्थ्यां वित्तनाशः स्यात् पञ्चम्यां बुद्धिवर्द्धनम् ।
षष्ठ्यां ज्ञानक्षयं सौख्यं लभते सप्तमीदिने ॥ 86 ॥
अष्टम्यां बुद्धिनाशः स्यान्नवम्यां वपुषः क्षयः ॥ 87 ॥
दशम्यां राजसौभाग्य एकादश्यां शुचिर्भवेत ॥ 88 ॥
द्वादश्यां सर्वशुद्धिः स्यात् त्रयोदश्यां दरिद्रता ॥ 89 ॥
तिर्य्यग् योनिश्चतुर्द्दश्यां हानिर्मासावसानके ॥ 90 ॥
सन्ध्यागर्ज्जितनिर्घोष भूकम्पोल्कानिपातने ॥ 91 ॥
एतानन्यांश्च दिवसान् प्रत्युक्तान् परिवर्ज्जयेत् ॥ 92 ॥
द्वितीय पञ्चमी चैव षष्ठी चैव विशेषतः ॥ 93 ॥
द्वादश्यामपि कर्त्तव्यं त्रयोदश्यामथापि वा ॥ 94 ॥
इति यत षष्ठीत्रयोदशीविधानं तद्विष्णुविषयं रामार्च्चनादिकृतत्वात् ॥ 95 ॥
पञ्चमी सप्तमी षष्ठी द्वितीया पूर्णिमा तथा ॥ 96 ॥
त्रयोदशी च दशमी प्रशस्ता सर्व्वकामदा ।
इति सनत्कुमार वचनाच्च ॥ 97 ॥

॥ 81 ॥

ॐ

# अथ दीक्षायां नक्षत्र निर्णयः —

अश्विन्यां सुखमाप्नोति भरण्यां मरणं ध्रुवम् ।
कृत्तिकायां भवेद्दुःखी रोहिण्यां वाक्पतिर्भवेत् ॥ ९८ ॥
मृगशीर्षे सुखावाप्तिरार्द्रायां बन्धुनाशनम् ।
पुनर्वसौ धनाढ्यः स्यात् पुष्ये शत्रुविनाशनम् ॥ ९९ ॥
अश्लेषायां भवेन्मृत्युर्मघायां दुःखमोचनम् ।
सौम्यायां सुतहानिः स्यान्मूलायां कीर्तिवर्द्धनम् ॥ १०० ॥

पूर्वफल्गुन्यां प्राप्नोति धनं न संशयः ॥ १०० ॥

ज्ञानञ्चोत्तरफाल्गुन्यां हस्तायाञ्च धनी भवेत् ।
चित्रायां ज्ञानसिद्धिः स्यात् स्वात्यां शत्रुविनाशनम् ॥ १ ॥
विशाखायां सुखं चानुराधायां बन्धुवर्द्धनम् ।
ज्येष्ठायां सुतहानिः स्यान्मूलायां कीर्तिवर्द्धनम् ॥ २ ॥
पूर्वाषाढोत्तराषाढे भवेतां कीर्तिदायिके ।
श्रवणायां भवेद्दुःखी धनिष्ठायां दरिद्रता ॥ ३ ॥
बुद्धिः शतभिषायां स्यात् पूर्वभाद्रे सुखी भवेत् ।
सौख्यञ्चोत्तरभाद्रे च रेवत्यां कीर्तिवर्द्धनम् ॥ ४ ॥
आर्द्राकृत्तिकपौर्णेषस्तु शिववाद्धतरोविषये ।

तथा च

[illegible] स्पते ।

यदीशस्य कृशानोर्वा मंत्रारम्भो यथाक्रमम् ॥५॥

ग्रन्थान्तरे—

अश्विनी-भरणी-स्वाती-विशाखाहस्तभेषु च।
ज्येष्ठोत्तराश्रयेष्वेवं कुर्यान्मंत्राभिषेचनम्।

॥६॥ इति ज्येष्ठाभरण्योर्याभिधानं तत्र शाम्भवविषयमगस्त्यसंहितोक्तत्वात्

## अथ योगनिर्णयः—

विश्वसारे—

शुभः सिद्धस्तथायुष्मान् ध्रुवयोगस्ततः परम्।
प्रीतिः सौभाग्ययोगश्च वृद्धियोगस्ततः परम्।
हर्षणश्च तथा योगः सर्वे ह्येते शुभावहाः ॥७॥

रत्नावल्याम्—

योगाः स्युः प्रीतिरायुष्मान् सौभाग्यः शोभनो धृतिः।
वृद्धिर्ध्रुवः सुकर्मा च साध्यः शुक्लश्च हर्षणः।
वरीयांश्च शिवः सिद्धो ब्रह्म इन्द्रश्च षोडश ॥८॥

## अथ करणनिर्णयः—

बव-बालव-कौलव तैतिल वणिजस्तदनन्तरम्।
करणानि शुभान्येव सर्वतंत्रेषु भाषितम् ॥९॥

अथलग्ननिर्णयः —

वृषे सिंहे च कन्यायां धनुर्मीनाख्यलग्नके ।
चन्द्रतारानुकूले च कुर्य्याद्दीक्षा प्रवर्त्तनम् ॥ १०॥

तथा —

स्थिरलग्नं विष्णुमंत्रे शिवमंत्रे चरं शुभम् ।
द्विस्वभावगतं लग्नं शक्तिमंत्रे प्रशस्यते ॥ ११ ॥

अगस्त्यसंहितायाम् —

त्रिषडायगताः पापाः शुभाः केन्द्रत्रिकोणगाः ।
दीक्षायान्तु शुभाः सर्व्वे वक्रस्थाः सर्व्वनाशकाः ॥ १२॥

अथ पक्षनिर्णयः —

शुक्लपक्षे दीक्षा शुभा दीक्षा कृष्णेहव्यापञ्चमाद्दीनात् ॥ १३ ॥

अगस्त्यसंहितायाम् —

शुक्लपक्षे तु कृष्णे वा दीक्षा सर्वत्र शोभना ॥ १४ ॥

कालान्तरे तु —

भूमिकामैः सिते सदा मुक्तिकामैः कृष्णपक्षे इति शेषः ।
निषिद्धेष्वपि मासेषु विशेषो मुनिभिरुदितः ।

रत्नावल्याम् —

भाद्रे पक्षे वदिते तथा कृष्णा चतुर्दशी ।

कार्त्तिके नवमी शुक्ला तथा मार्गे तृतीयिका।
पौषे तु नवमी शुक्ला माघे शुक्ला चतुर्थिका।
फाल्गुना नवमी शुक्ला चैत्रे कामचतुर्दशी।
त्रयोदशीति केचित ॥15॥
वैशाखे चाक्षया चैत्रे ज्येष्ठे दशहरा तिथि।
आषाढे पञ्चमी शुक्ला श्रावणे कृष्णपञ्चमी ॥16॥
एतानि देवपर्वाणि तीर्थकोटिफलं लभेत्।
अत्र दीक्षा प्रकर्त्तव्या न मासञ्च परीक्षयेत् ॥17॥
न वारं न च नक्षत्रं न तिथ्यादिकदूषणम्।
न योगकरणञ्चैव शंकरेण च भाषितम् ॥18॥

अन्यच्च मतम् —

चैत्रे त्रयोदशी शुक्ला वैशाखेकादशी सिता।
ज्येष्ठे चतुर्दशी कृष्णा आषाढे नागपञ्चमी ॥19॥
श्रावणेकादशी भाद्रे रोहिणी सहिताष्टमी।
आश्विने च महापुण्या महाष्टम्याश्रयाष्टमी ॥20॥
कार्त्तिके नवमी शुक्ला मार्गशीर्षे तथा सिता।
षष्ठी चतुर्दशी पौषे माघेह्येकादशी सिता।

फाल्गुने च सित षष्ठी चेति कालनिर्णयः ॥२१॥

योगिनीतंत्रे —

अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः ।
शिवसंक्रान्तिदिवसे युगाद्यायां सुरेश्वरि ॥२२॥
मन्वन्तरेषु सर्वासु महापुण्यादिनेषु च ।
चतुर्थी पञ्चमी चैव चतुर्दश्यष्टमी तथा ।
तिथयः शुभदाः प्रोक्ता दीक्षा ग्रहणकर्म्मणि ।
इत्यादि वचनाच्चतुर्दश्यष्टमीति शाक्त विषयम् ॥२३॥
चतुर्थीति गणेशविषयं तत्तत्कल्पोक्तत्वात् ॥२४॥
निन्दितेष्वपि मासेषु दीक्षोक्ता ग्रहणे शुभा ।
सूर्य्यग्रहणकालस्य समनो नास्ति भूतले ।
विशयतो महादेवि दीक्षाग्रहणकर्म्मणि ।

तत्र —

यद्यत्कृतं सर्व्वमनन्तफलदं भवेत् ।
न वारतिथिमासादिशोधनं सूर्य्यपर्व्वणि ।
एवं चन्द्रग्रहणे हि ॥२५॥

तथाच रुद्रयामले —

न कुर्य्याद् शाक्तिकीं दीक्षामुपरागे विभावसौ ।
न कुर्य्याद्वैष्णवीं तान्तु यदि चन्द्रमसो ग्रहः ।
एताच्च गोपाल श्रीविद्येतरविषयम ॥२६॥
अन्येषु पर्व्वयोगेषु ग्रहणे चन्द्रसूर्य्ययोः ।
इति गौतमीयात् ॥२७॥
प्रशस्ता सकला दीक्षा स्वस्ववारे तदा भवेत् ।
सूर्य्यग्रहणकाले तु नान्यदन्वेषितं भवेत् ।
इति योगिनीहृदयाच्च ॥२८॥

तादृशो तु विशेषो यथा —

दीक्षाकालं प्रवक्ष्यामि मोलतंत्रानुसारतः ।
कृष्णपक्षस्य चाष्टम्यां शुभे लग्ने शुभे क्षणे ॥२९॥
पूर्व्वभाद्रपदा पुनर्व्वसु विशाखादि संयुते ।
अथवाप्यनुराधायां रेवत्यां वा प्रशस्यते ॥३०॥
जानीयाच्छोभनं कालं मंत्रस्य ग्रहणं प्रति ।
इषे चैव विशेषेण कार्त्तिके च विशेषतः ॥३१॥

सूर्य्यग्रहणे विशेषमाह रत्नावलीधृत यामले —

श्रीपरा यानि बीजानि सौपादौ गारुत्त यो मनुः ।

सूर्य्यस्य ग्रहणे लब्धो नृणां ~~पर्व्वसतैः समः~~ मुक्तिफलप्रदः ॥ 32 ॥

अमावस्या सोमवारे भौमवारे चतुर्दशी ।

सप्तमी शनिवारे च सूर्य्य ~~अष्टमी च बृहस्पतौ~~ पर्व्व ~~शतैः समाः~~ ॥ 33 ॥

X देवपर्व्वसमाज्ञाय तासु दीक्षां समाचरेत् X

कुलार्णवे —

सप्तमी शनिवारे च सोमे दर्शस्तथैव च ।

चतुर्थी कुजवारे च अष्टमी च बृहस्पतौ ।

देवपर्व्वसमा ज्ञेया तासु दीक्षां समाचरेत् ॥ 34 ॥

यामले —

पूर्णतीर्थे कुरुक्षेत्रे देवीपीठचतुष्टये ।

प्रयागे श्रीगिरौ काश्यां कालाकालं न शोधयेत् ॥ 35 ॥

विष्णुयामले —

देवीबोधं समारभ्य यावत् स्यान्नवमी तिथिः ।

कुलावासु बुधैर्दीक्षा सर्व्वाभीष्टफलप्रदा ॥ 36 ॥

शुक्लपक्षे विशेषेण तत्रापि तिथिरष्टमी ।

तत्रापि शारदा दुर्गा यत्र देवि गृहे - गृहे ।

तत्र [illegible] ~~[illegible]~~ [illegible] न शोधयेत् ॥ 37 ॥

तथा—

बोधने चैव दुर्गाया: कालाकालं न शोधयेत् ।
अशोकाख्याष्टमी यत्र रामाख्या नवमी तथा ।
लग्ने वाप्यथवा लग्ने यत्र तत्र तिथावपि ।
गुरोराज्ञानुरूपेण दीक्षा कार्या विशेषत: ॥ 38 ॥
चतुर्थ्यङ्गारवारे च दिवसे त्रिदिनस्पृशि ।
तत्र लग्नादिकं किञ्चिन्न विचार्यं कथञ्चन ॥ 39 ॥

सम्मयातन्त्रे —

युगाद्यायां जन्मदिने विवाह दिवसे तथा ।
विषुवायनयोश्चन्द्रे नैव किञ्चिद्विचारयेत् ॥ ५० ॥

तथा

शिष्यानाहूय गुरुणा कृपया यदि दीयते ।
तदा लग्नादिकं किञ्चिन्न विचार्यं कदाचन ॥ ५१ ॥
सर्वे वारा ग्रहा: सर्वे नक्षत्राणि च राशय: ।
यस्मिन्नहनि मंत्रज्ञो गुरु: सर्वे शुभावहा: ॥ ५२ ॥
योगिनीतंत्रे ग्रहेण च महातीर्थे नास्ति कालस्य निर्णय: ॥ ५[illegible]

अथ दीक्षास्थानम् —

अथ वक्ष्यामि दीक्षायां स्थानं तंत्रानुसारत: ।

गोशालायां गुरोर्गेहे देवागारे च कानने ।
पुण्यक्षेत्रे तपोस्थाने नदीतीरे च मन्त्रवित् ।
धात्री-बिल्वसमीपे च पर्वताग्रे गुहासु च ।
गंगायास्तु तटे वापि कोटिकोटिगुणं भवेत् ॥ ५५ ॥
निषिद्धस्थानमाह —
गंगायां भास्कर क्षेत्रे विरजे चन्द्रपर्वते ।
चट्टले च मातंगे च तथा कन्याश्रमेषु च ।
न गृह्णीयात्ततो दीक्षां तीर्थपर्वतेषु पार्वति ॥ ५६ ॥
वाराहीतंत्रे —
शुक्रोऽस्तो यदि वा वृद्धो गुर्वादित्यो भवेद्यदि ।
मेषवृश्चिकसिंहेषु तदा दोषो न विद्यते ।
महाविद्यासु सर्वासु कालादिविचारो नास्ति ।
तदुक्तं मुण्डमालातंत्रे —
कालादिशोधनं नास्ति न चामित्रादिदूषणम् ॥ ५८ ॥
अथ माला निर्णयः —
सनत्कुमारसंहितायां —
[illegible] तां क्रमात् ।

तिस्रोऽङ्गुल्यास्त्रिपर्व्वाणो मध्यमा चैकपर्व्विका ।
पर्व्वद्वयं मध्यमाया मेरुत्वेनोपकल्पयेत् ॥५१॥

तत्र क्रममाह सनत्कुमारसंहितायां —

अनामा मध्यमारभ्य कनिष्ठादीति एव च ।
तर्ज्जनीमूलपर्य्यन्तं दशपर्व्वसु संजपेत् ॥५८॥

तथा —

अनामामूलमारभ्य कनिष्ठादीति एव च ।
तर्ज्जिमध्यपर्य्यन्तमष्टपर्व्वसु संजपेत् ।
एतद्वचनन्तु अष्टोत्तरशतादिविषयम् ॥५९॥

शक्तिविषये पुनः —

अनामिकात्रयं पर्व्व कनिष्ठायास्त्रिपर्व्विका ।
मध्यमायाश्च त्रितयं तर्ज्जनीमूलपर्व्वणि ।
तर्ज्जन्यग्रे तथा मध्ये यो जपेत् स तु पापकृत् ।
इति नारदवचनात् ॥५०॥

तथा हंसपरमेश्वरे —

पर्व्वद्वयमनामायाः, परिवर्त्तनेन वै क्रमात् ।
पर्व्वत्रयं मध्यमायास्तर्ज्जन्येकं समाहरेत् ।

पर्व्वद्वयञ्च तर्ज्जन्या मेरुं तद्विद्धि पार्व्वति ।
शक्तिमाला समाख्याता सर्व्वतंत्रे प्रदीपिका ॥८१॥

तथा –

अनामामूलमारभ्य प्रादक्षिण्यक्रमेण च ।
मध्यमामूलपर्य्यन्तमष्टपर्व्वसु संजपेत् ।
इदमप्यष्टोत्तरशतादिविषयम् ॥८२॥

श्री विद्याविषये पुनः –

अनामामध्यमायाश्च मूलाग्रञ्च द्वयं द्वयम् ।
कनिष्ठायाश्च तर्ज्जन्यास्त्रयं पर्व्व सुरेश्वरि ।
अनामामध्यमाश्च मेरुः स्यादितर्षं स्मृताम् ।
प्रादक्षिण्यक्रमाद्देवि जपेत्सुर सुन्दरीम् ।
इति यामलवचनात् ॥८३॥

कनिष्ठामूलमारभ्य प्रादक्षिण्यक्रमेण च ।
तर्ज्जनीमूलपर्य्यन्तमष्टपर्व्वसु संजपेत् ।
इदमप्यष्टोत्तरशतविषयम् ॥८४॥

मुण्डमालातंत्रे –



अनामिकाद्वयं पर्व्व कनिष्ठादिक्रमेण तु ।

तर्ज्जनीमूलपर्य्यन्तं करमाला प्रकीर्त्तिता ॥55॥

अंगुली न वियुञ्जीत किञ्चिदाकुञ्चिते तले ।
अंगुलीनां वियोगाच्च छिद्रे च स्रवते जपः ॥56॥
अन्यथापि अंगुल्यग्रेषु पर्व्वाग्रे पर्व्वसु मेरुलंघने ।
पर्व्वसन्धिषु यज्जप्तं तत् सर्व्वं निष्फलं भवेत् ॥57॥
गणनाविधिमुल्लंघ्य यो जपेत्तज्जपं यतः ।
गृह्णन्ति राक्षसास्तेन गणयेत् सर्व्वथा बुधः ॥58॥

विश्वसारे —

जपसंख्या तु कर्त्तव्या नासंख्यातं जपेत्सुधीः ।
न संख्या कारकस्यास्य सर्व्वं भवति निष्फलम् ॥59॥
हृदये हस्तमारोप्य तिर्य्यक् कृत्वा करांगुलीः ।
आच्छाद्य वाससा हस्तौ दक्षिणेन जपेत् सदा ॥60॥
नाक्षतैर्हस्तपर्व्वैर्व्वा न धान्यैर्न च पुष्पकैः ।
न चन्दनैर्मृत्तिकया जपसंख्यान्तु कारयेत् ।
जापने यादृशी माल्यं संख्या नेहापि च तादृशी ॥61॥

अथ वर्णमाला —

सनत्कुमारीये —

क्रमोत्क्रमगतैर्माला मातृकार्णैः
सबिन्दुकैः साष्टवर्गैरन्तरयजनकर्मणि ।
आदि कु चु टु तु पु यु शवोष्टौ प्रकीर्तिताः ॥ 62 ॥

तत्रायमर्थः
अकारादि वर्णान् प्रत्येकं सबिन्दु कृत्वा शतं संजप्य
अकारादीनाम् वर्णानां कवर्गादि नागन्तान्यवर्णान्
यानुलोम स्वरं कृत्वा प्रत्येकमुच्चार्य जप कर्तव्यः ।
अनेन प्रकारेणाष्टोत्तरशत संख्याजपो भवति ।
अन्तर्यजन इत्युप लक्षणम् ॥ 63 ॥

तथा च -
सबिन्दुं वर्णमुच्चार्य पश्चान्मंत्रं जपेद्बुधः ।
अकारादिक्षकारान्तं बिन्दुयुक्तं विभाव्य च ।
वर्णमाला समाख्याता अनुलोमाविलोमिका ।
इति नारदवचनात् ॥ 64 ॥

प्रकारान्तरं विश्वसारे —
अनुलोमविलोमेन वर्गाष्टकविभेदतः ।

मन्त्रोच्चारणाद्येषु वर्णान् वर्णमन्त्रान्तरान् ... ।

कुर्य्यात्तृणमयीं मालां सर्व्वतन्त्र प्रकाशिनीम् ।
चरमाणिं मेरुरूपं लंघनं नैव कारयेत् ॥65॥
तत्र मालायां विशेष इत्थ नियम: —
अन्यां विद्रुमभासमान भुजगीं सुप्तोध्ववर्णाञ्जलीं
आरोहप्राले रोहतः शतमयीं वर्गाष्टकाष्टे चराम् ॥66॥
अत्र वैशम्पायनसंहितायां —
प्रलयानलात् पूर्व्वं रुद्ररूपेण मूर्च्छिना ।
उद्धितं पृथिवीबीजमतोऽन्ते तं नियोजयेत् ।
प्रलयाक्षरितं बीजं लकारमनलात् पुनः ।
द्विलाक्षरविधावत्र पुनरन्ते नियोजयेत् ।
एतेन लकारजपं ज्ञेयमिति ॥67॥
अथ मालायां मणिनिर्णय: —
पद्मविजाभिर्माला वोढयोग श्रृणुष्व ताः ।
रुद्राक्ष-शंख पद्माक्षपुत्र जीवक मौक्तिकैः ।
~~अंगुल्यामभनादेकं सर्व्व~~
स्फाटिकैर्मणिरत्नैश्च सौवर्णैर्विद्रुमैस्तथा ।
राजतैः कुशमूलैश्च गृहस्थस्याक्षमालिका ॥68॥

अंगुलीगणादेकं पर्व्वणपञ्चगुणं भवेत् ।
पुत्रजीवैर्दशगुणं शतं शंखैः साहस्रकम् ।
प्रवालैर्कम्माणि रत्नैश्च दशसाहस्रिकं स्मृतम् ।
तदेव स्फाटिकैः प्रोक्तं मौक्तिकैर्लक्षमुच्यते ।
पद्माक्षैर्दशलक्षं स्यात् सौवर्णैः कोटिरुच्यते ।
कुशग्रन्थ्या कोटिशतं रुद्राक्षैः स्यादनन्तकम् ।
X पद्माक्षैर्दशलक्षं स्यात् सौवर्णैः कोटिरुच्यते । X
सर्व्वैर्विरचिता माला नृणां भुक्तिफलप्रदा ॥ 69 ॥

कालिपुराणे —

रुद्राक्षैर्वा यदि जपेदिन्द्राक्षैः स्फटिकैस्तथा ।
नान्यमध्ये प्रयोक्तव्यं पुत्रजीवादिकञ्च यत् ।
पद्मनन्तु प्रयुञ्जीत मालायां जपकर्म्मणि ।
तस्य कामञ्च मोक्षञ्च न ददाति प्रियंकरी ॥ 70 ॥

मुण्डमालायां —

श्मशाम धुस्तूरैर्माला ज्ञेया धूमावतीविधौ ।
नरांगुल्यस्थिभिर्माला प्रोक्ता मोक्षकामदा ।
नाना संगमजं ... रत्नेन ... प्रिये ।

सद्या गोज्या प्रयत्नेन जनन्या आरवत् प्रिये ॥ ७१ ॥

कामनाभेद—

पद्माक्षैर्विहिता माला शत्रूणां नाशिनी मता ।
कुशग्रन्थिमयी माला सर्व्वपापप्रणाशिनी ।
पुत्रजीवफलैः कॢप्ता कुरुते पुत्रसम्पदम् ।
निर्म्मिता रौप्य मणिभिर्जपमालेप्सितप्रदा ।
प्रवालैर्व्विहिता माला प्रयच्छेद्विपुलं धनं ॥ ७२ ॥

भैरवीविद्यापास्तु वाराहीतंत्रे—

सुवर्णमणिभिर्म्मालां स्फटिकैः शंखनिर्म्मिताम् ।
प्रवालैरेव वा कुर्य्यात् पुत्रजीवं विवर्ज्जयेत् ।
पद्माक्षाश्चैव रुद्राक्षं भद्राक्षाश्च विशेषतः ॥ ७३ ॥
त्रिपुराभजनपादौ तु रक्तचन्दनबीजादिभिः प्रशस्ता ।

तथा च तंत्रे-

रक्तचन्दन माला तु भोगमोक्षप्रदा भवेत् ॥ ७४ ॥

तथा—

वैष्णवे तुलसीमाला गजदन्तैर्गणेश्वरे ।
त्रिपुराया जपे शस्ता रुद्राक्षै रक्तचन्दनैः ॥ ७५ ॥

मुण्डमालायाम् –

महाशंखमयी माला नीलसारस्वते विधौ ॥76॥

महाशंखस्तु तन्त्रे –

नृकपालास्थिखण्डेन रचिता जपमालिका ।
महाशंखमयी माला ताराविद्याजपे प्रिये ।
कर्णनेत्रान्तरस्थास्थि महाशंखः प्रकीर्तितः ॥77॥

मणिनियमस्तु मुण्डमालायाम् –

अन्योन्यसमरूपाणि नातिस्थूल कृशानि च ।
कीटादिभिरदुष्टानि न जीर्णानि नवानि वै ॥78॥

तथा च गौतमीये –

पञ्चाशन्मणिभिर्माला त्रिंशद्भिर्धनसिद्धये ।
सर्वार्थाः सप्तविंशत्या पञ्चदश्याभिचारिके ।
पञ्चाशद्भिः काम्यसिद्धिः स्यात्तथा चतुरोत्तरैः ।
अष्टोत्तरशतैः सर्वसिद्धिरुक्ता मनीषिभिः ॥79॥

अथ आसन भेदाः ।

हंसमाहेश्वरे –

कम्बलं कोमलं काष्ठं दारवं कर्मसाधनम् ।
रौप्यं [illegible] शुद्धं [illegible] सुरेश्वरि ॥80॥

लोम्नि चैव पद्माशीनस्तदा सर्वं विनश्यति ।
लोमस्पर्शन मात्रेण सिद्धि हानिः प्रजायते ॥४१॥
कम्बलं कम्बलञ्चैव प्रोच्य रक्तकम्बलम् ।
कृष्णाजिने ज्ञानसिद्धिर्मोक्षं श्रीर्व्याघ्रचर्मणि ॥४२॥
कुशासने मंत्रसिद्धिर्नात्र कार्या विचारणा ।
धरण्यां दुःखसम्भूति दौर्भाग्यं दारुजासने ॥४३॥
वंशासने दारिद्र्यं स्यात् पाषाणे व्याधिपीड़नम् ।
तृणासने यशोहानिः पल्लवे चित्तविभ्रमः ।
जपध्यानतपोहानिं वस्त्रासनं करोति हि ॥४४॥
अतएव वस्त्रासनं केवलमेव विरुद्धं वस्त्रासनं
रोगहरमित्यादिवचनेन विशिष्टस्य फलजनकत्वात्
चैलाजिन कुशोत्तरमिति भगवद्वचनाच्च ॥४५॥
तथा च गौतमीये —
तथा मृद्वासने मंत्री पटाजिन कुशोत्तर इति ॥४६॥
योगिनी हृदये —
नदीक्षितो विशेज्जातु कृष्णसाराजिने गृही ।
विशेद्यतिर्वनस्थश्च ब्रह्मचारी च भिक्षुकः ॥४७॥

आगमकल्पद्रुमे —

मेषव्याघ्रगजोष्ट्र मृक्षोरगत्वचस्तु षट्कर्म्मसु
प्रत्येकं हितान्यासनानि ॥४४॥

अथ मालासंस्कारः ।

सनत्कुमारीये —

अप्रतिष्ठितमालाभिर्मन्त्रं जपति यो नरः ।
सर्वं तन्निष्फलं विद्यात् क्रुद्धा भवति देवता ॥४९॥

गौतमीये —

कार्पाससम्भवं सूत्रं धर्म्मकामार्थमोक्षदम् ।
तच्च विप्रेन्द्रकन्याभिर्निर्म्मितञ्च सुशोभनम् ॥५०॥
श्वेतं रक्तं तथा कृष्णं पट्टसूत्रमथापि वा ।
शान्तिवैश्याभिचारेषु मोक्षैश्वर्यजयेषु च ।
शुक्लं रक्तं तथा पीतं कृष्णं वर्णेषु च क्रमात् ।
सर्व्वेषामेव वर्णानां रक्तं सर्व्वेप्सितप्रदम् ॥५१॥
त्रिगुणं त्रिगुणीकृत्य प्रथमतः शिल्पशास्त्रतः ।
मणिरत्नप्रमाणस्य सूत्रं कुर्य्याद्विचक्षणः ॥५२॥
एकैकं मातृकावर्णं मातृरं प्रजपेत्सुधीः ।
मालाग्रामं सूत्रेण ग्रथयेत् साधकोत्तमः ॥५३॥

ब्रह्मग्रन्थिं विधायेथ्थं येकञ्च ग्रन्थिसंपुतम् ।
ग्रथयित्वा पुरे मालां ततः संस्कारमारभेत् ॥९५॥
कस्यचिन्मते मूलविद्यया प्रथयेत् ।
तथा च एकवीराकल्पे —
मातृकावर्णतो ग्रन्थिं विद्यया वाथ कारयेत् ।
सुवर्णादि गुणैर्वापि ग्रथयेत् साधकोत्तमः ।
ब्रह्मग्रन्थिं ततो दद्यान्नागपाशमथापि वा ।
कवचेनावबन्धीयान्मालां ध्यानपरायणः ।
सविशेषं ततो मेरुं सूत्रद्वयसमन्वितम् ।
प्रक्षेपतारयोगेन बन्धीयात साधकोत्तमः ।
एवं निष्पाद्य देवेशि प्रतिष्ठाञ्च समाचरेत् ॥९५॥
गौतमीये —
मुखे मुखन्तु संयोज्य पुच्छं नियोजयेत् ।
गोपुच्छसदृशी माला यद्वा सर्पाकृतिशुभाः ॥९६॥
मुखपुच्छनियमस्तु छन्दः सारे —
रुद्राक्षस्योन्नतं प्रोक्तं मुखं पुच्छन्तु निम्नगम् ।
कलाक्षस्य च सूक्ष्मास्यं सविन्दु बिलयं मुखम् ।

सौविन्दुकस्य स्थूलांशं पुच्छं श्लक्ष्णमिति स्मृतम् ।
एवं ज्ञात्वा मुखं पुच्छं रुद्राक्षास्मारुहाक्रमो: ।
ततः सजातीयमेकादं येरुत्ते ना ~~सामन्ते~~ यतो न्यसेत् ॥९९॥
एकैकं मणिमादाय ब्रह्म ग्रंथिं प्रकल्पयेत् ।
एकैकं मातृका वर्णं ग्रथनादौ तु संजपेत् ॥१९४॥
ग्रन्थिनियमस्तत्रैव —
त्रिरावृत्तिग्रंथिकेन तत्र्यर्द्धेन विधीयते ।
सार्द्धद्वयावृत्तेन ग्रंथिं कुर्यात् तथा दृढम् ।
इत्येताभ्यामिच्छाविकल्पः ॥९९॥

## कालिकापुराणे —

ब्रह्मग्रंथियुतं कुर्यात् प्रतिबीजं यथास्थितम् ।
अथवा ग्रंथिरहितं दृढरज्जुसमन्वितम् ।
एवं निर्म्माय मालां वै शोधयेन्मुनिसत्तमः ॥१००॥
अश्वत्थपत्रनवकैः पद्माकारस्तु कल्पयेत् ।
तन्मध्ये स्थापयेन्मालां मातृकामुलसमुच्चरन् ।
क्षालयेत् पञ्चगव्येन सद्योजातेन सज्जलैः ॥१॥

## सद्योजातमंत्रस्तु —

ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमः ।
भवे भवेनादिभावे भजस्व मां भवोद्भवाय वै नमः ।
चन्दनागुरु गन्धाद्यैर्वामदेवेन चर्चयेत् ।

### वामदेवमंत्रस्तु —

ॐ नमो ज्येष्ठाय नमो रुद्राय नमो कालाय नमः
कालविकरणाय नमो बलप्रमथनाय नमः सर्वभूत
दमनाय नमो नमो मनोन्मनाय ।
धूपयेत्त्वघोरेण ।

### अघोरमंत्रस्तु —

ॐ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यश्च
सर्वतः सर्वसर्वेभ्यो नमस्तेऽस्तु रुद्ररूपेभ्यः ।
नैवेद्ये तत्पुरुषेण तु ।
ॐ (नमो) तत्पुरुषाय विद्महे महादेवाय धीमहि
तन्नो रुद्रः प्रचोदयात् ।
मंत्रयत पञ्चमैनेव प्रत्येकन्तु शतं शतम् ।
मेकव्य मंत्रैश्चैव पुत्लेन न च शतं शतम् ।

### पञ्चममंत्रस्तु —

ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां
ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिः शिवो मेऽस्तु सदाशिवोम्
प्रत्येकन्तु सकृत् सकृदिति वा ।
तथा च तत्रैव —
प्रत्येकं मंत्रपञ्चकमीपञ्चमेन सकृत् सकृत् ॥२॥
तथा च गौतमीये समुदायमात्माधिकृत्य —
पञ्चमेनैव सूक्तेन शतान्यूनेन मंत्रयेदिति
दशांशमालायां वा शतजपः ।
तथा वाऽपि यजेद्देवं यथाविभवविस्तरैः ॥३॥
मालायां प्राणप्रतिष्ठानन्तरं देवतायां पूजयेत् ।
तथा च सनत्कुमारसंहितायाम् —
संस्कृत्यैवं बद्धो मालां तत्प्राणांस्तत्र योजयेत् ।
मूलमंत्रेण तां माल्यं पूजयेद्द्विजसत्तमः ॥५॥
वाराहीतंत्रे —
माले माले महामाले सर्वतत्त्वस्वरूपिणि ।
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ।
[illegible] सम्यर्चयेत् ।

इति शोकविषयम् ॥५॥

विष्णु विष्णेतु यामले —

रागभवञ्च तथा लक्ष्मीमक्षादि मालिकां ततः ।
डेंहन्तां हृदयवर्णान्तां मंत्रेणानेन पूजयेत् ।
मंत्रेयन्मूलमंत्रेण क्रमेणोत्क्रमयोगतः ।
तत्रैव मातृकावर्णैर्मिंत्रयेत्तान्त मंत्रवित् ॥६॥

योगिनीतंत्रे —

होमकर्म ततः कुर्याद्दैवताभावासिद्धये ।
अष्टोत्तरशतं हुत्वा सम्पाद्याज्यं विनिक्षिपेत् ॥७॥
होमकर्मण्यशक्तश्चेद्द्विगुणं जपमाचरेत् ।
नान्यमंत्रं जपेन्मंत्री कम्पयेन्न विधूनयेत् ॥८॥
कम्पनात् सिद्धिहानिः स्याद्धुननं बहुदुःखदम् ।
शब्दे जाते भवेद्रोगः कराद्भ्रष्टे विनाशकृत् ॥९॥
छिन्ने सूत्रे भवेन्मृत्युस्तस्माद्यत्नपरो भवेत् ॥१०॥
जपन्तो कटिदेशे वा उच्चदेशेऽथवा न्यसेत् ।
ॐ त्वं माले सर्ववेदानां सर्वसिद्धिप्रदा मता ।
तेन सत्येन मे सिद्धिं देहि मातर्नमोऽस्तु ते ।
इत्युक्त्वा परिज्ञाय गोपयेद्यत्नतो गृही ॥११॥

कामनाभेदे अंगुलीनियमाह गौतमीये —
तर्ज्जन्यंगुष्ठयोगेन शत्रूच्चाटन कर्म्मणि ।
अंगुष्ठा मध्यमा योगात् सर्वसिद्धिः सुनिश्चिता ॥२॥
अंगुष्ठानामिकायोगादुच्चाटोच्छादने मते ।
ज्येष्ठकानिष्ठयोगेन शत्रूणां नाशनं मतम् ॥३॥
वैशम्पायनसंहितायाम् —
अंगुष्ठमध्यमाभ्यां च चालयेन्मध्यमध्यतः ।
तर्ज्जन्या न स्पृशेदेनां मुक्तिदो गणनक्रमः ॥४॥
जीर्णे सूत्रे पुनः सूत्रं ग्रथयित्वा शतं जपेत् ।
प्रमादात् पतितो हस्तात् शतमष्टोत्तरं जपेत् ।
जपेन्निसिद्ध- संस्पर्शे क्षालयित्वा यथोदितम् ॥५॥
छिन्नेऽपि अष्टोत्तरशत- जपः कार्य्यः ।
तदुक्तं कुब्जिकातंत्रे —
छिन्ने सूत्रे पुनः सूत्रं ग्रथयित्वा शतं जपेदिति ।
करभ्रष्ट छिन्नयोस्तुल्यफल कत्वात् ॥६॥
प्रकारान्तरमागमकल्पद्रुमे —
मूलयुक्ता दिका पूजां समाप्य तत्र पूजयेत् ।

गणेश - सूर्य - विष्णु - ईशान दुर्गाश्चावाह्य मंत्रवित् ॥१७॥
पञ्चगव्य ततः क्षिप्त्वा हंसो मंत्रेण मंत्रवित् ।
तस्मादुद्धृत्य तां मालां स्वर्णपात्रे निधापयेत् ॥१८॥
पयो - दधि - घृत क्षौद्र शर्करादैरनुक्रमात् ।
तोयधारान्तरैः कृत्वा पञ्चामृतविधिं ततः ॥१९॥
क्रमादथैव संस्थाप्य स्नापयेत् शीतलैर्जलैः ।
ततश्चन्दन सौगन्धि कस्तुरी कुम्कुमादिभिः ।
तामालिप्य हंसोऽमंत्र पष्ठोत्तर शतं जपेत् ॥२०॥
तस्यां नवग्रहांश्चैव दिक्पालांश्चात्र पूजयेत् ।
ततः संपूज्य च गुरुर्दद्याज्जपमालिकां शुभाम् ॥२१॥

## अथ पुरश्चरणम् ।

### योगिनी हृदये —

गुरोराज्ञां समादाय शुद्धान्तः करणो नरः ।
ततः पुरश्क्रियां कुर्य्यान्मन्त्रसंसिद्धिकाम्यया ॥२२॥
जीवहीनो यथा देही सर्वकर्मसु न क्षमः ।
पुरश्चरणहीनोऽपि तथा मंत्रः प्रकीर्तितः ।
तस्मादादौ स्वयं कुर्य्याद् गुरुं वा कारयेद्बुधः ॥२३॥

योगिनीहृदये –

गुरोरभावे विप्रं वा सर्वप्राणिहिते रतम् ।
स्निग्धं शास्त्रविदं मित्रं नानागुणसमन्वितम् ।
स्त्रियं वा सगुणोपेतां सपुत्रां विनियोजयेत् ॥२४॥

अथ पुरश्चरणे स्थाननिर्णयः । –

आदौ पुरष्क्रिया कर्त्तुं स्थाननिर्णय उच्यते ॥२५॥

गौतमीये –

पुण्यक्षेत्रं नदीतीरं गुहापर्वतमस्तकम् ।
तीर्थप्रदेशाः सिन्धूनां सङ्गमः पावनं महत् ॥२६॥
उद्यानानि विविक्तानि बिल्वमूलं तटं गिरेः ।
तुलसीकाननं गोष्ठं वृषशून्यं शिवालयम् ॥२७॥
अश्वत्थामलकीमूलं गोशाला जलमध्यतः ।
देवतायतनं कूलं समुद्रस्य निजालयम् ।
साधनेषु प्रशस्तानि स्थानान्येतानि मन्त्रिणाम् ॥२८॥
सूर्यस्याग्नेर्गुरोरिन्दोर्दीपस्य च जलस्य च ।
विप्राणाञ्च गवाञ्चैव सन्निधौ शस्यते जपः ॥२९॥
अथवा निवसेत्तत्र यत्र चित्तं प्रसीदति ॥३०॥

तथा—

गृहे शतगुणं विद्याद् गोष्ठे लक्षगुणं भवेत् ।
कोटिर्देवालये पुण्यमनन्तं शिवसान्निध्यौ ॥31॥

ब्रह्मयामले —

जपमेकगुणं गेहे गोष्ठे दशगुणं स्मृतम् ।
वनान्तरे शतगुणं तड़ागे सहस्रकम् ॥ 32 ॥
नदीतीरे लक्षगुणं नगाग्रे कोटि सम्मितम् ।
शिवालये कोटिसतमनन्तं गुरुसान्निध्यौ ॥ 33 ॥

तथा—

गृहे गोष्ठवनाराम - नदी - नद शिवालये ।
गुरोर्वा सान्निध्यौ यत्र स जपः परमो मतः ॥ 34 ॥
म्लेच्छ - दुष्ट - मृग व्याल शंकातंकविवर्जिते ।
एकान्त पावने निन्दारहिते भक्तिसंपुते ॥ 35 ॥
स्वदेशे धार्मिके देशे सुभिक्षे निरुपद्रवे ।
रम्ये भक्तजनस्थाने निवसेच्चापसः प्रिये ॥36॥
गुरूणां सान्निध्ये च चित्तैकाग्र्यस्थले तथा ।
एषामन्यतमं स्थानमाश्रित्य जपमाचरेत ॥ 37 ॥
पत्रग्रामे जपेन्मली तत्र कूर्मं विचिन्तयेत ॥38॥

गौतमीये—

पर्व्वते सिन्धुतीरे वा पुण्यारण्ये नदीतटे।
यदि कुर्य्याद् पुरश्चर्य्यां तत्र कूर्म्मं न चिन्तयेत्॥३९॥
ग्रामे वा यदि वा वास्तौ गृहे तच्च विचिन्तयेत्॥४०॥

अथ पुरश्चरणे भक्ष्यादि नियमः।—

गौतमीये—

पुरश्चरणकृन्मंत्री भक्ष्याभक्ष्यं विभावयेत्।
अन्यथा भोजनाद्दोषात् सिद्धिहानिः प्रजायते॥५१॥
शतान्नञ्च समश्नीयान्मंत्रसिद्धिसमीहया।
तस्मान्नित्यं प्रयत्नेन शस्तान्नाशी भवेन्नरः॥५२॥

अगस्त्यसंहितायाम् — वर्ज्जितम्।
दधि क्षीरं घृतं गव्यं ऐक्षवं गुड़
तिलाश्चैव सिता मुद्गाः कन्दं केमुकवर्ज्जितम्॥५३॥
नारिकेलफलञ्चैव कदली लवणी तथा।
आम्रमामलकञ्चैव पनसञ्च हरीतकी।
व्रतारम्भे प्रशस्तञ्च हविष्यं मन्यते बुधैः।
व्रतान्तर इति वा पाठः॥५५॥
हैमान्तिकं सिताश्विन्नं धान्यं मुद्गयवास्तिला यवाः।

कलायकं कुनीवारा वास्तूकं हिलमोचिका।
षष्टिकाकोलशाकञ्च मूलकं केमुकेतरम्।
लवणे सैन्धवसामुद्रे गव्येच दधिसर्पिषी।
पयोनुद्धृतसारञ्च पनसाम्र हरीतकी।
पिप्पली जीरकञ्चैव नागरंगकतिन्तिडी।
कदली च लवली धात्री फलान्यगुड़ मैक्षवम्।
अतैलपक्वं मुनयो हविष्यान्नं प्रचक्षते ॥५५॥
भुंजानो वा हविष्यान्नं शाकं यावकमेव वा।
पयो मूलं फलं वापि पत्रं पत्रोपलभ्यते ॥५६॥
रम्भाफलं तिन्तिड़ीकं कमला नाग रङ्गकम्।
फलान्येतानि भोज्यानि सम्भोहन्यानि विवर्जयेत् ॥५७॥
यत्तु योगिनीतंत्रे-
चिञ्चाञ्च नालिकाशाकं कलायं लकुचं तथा।
कदम्बं नारिकेलञ्च वङ्ग कुष्माण्डकं त्यजेत्।
तत्तु व्रतान्तरे बोध्यम् ॥५८॥
अथ पुरश्चरणे वर्ज्यानि —
विवर्जयेन्मधु क्षारं लवणं तैलमेव च।

निस्नेहं

ताम्बूलं कांस्यपात्रञ्च दिवाभोजनमेव च ॥४९॥

तथा—

क्षारञ्च लवणं मांसं गृञ्जनं कांस्यभोजनम् ।
माषाढ़कीमसूरांश्च को[illegible]श्चनकानपि ।
अन्नं पर्य्युषितञ्चैव [illegible]ष्टं कीटदूषितम् ॥५०॥

रामार्च्चनचन्द्रिकायाम् —

मैथुनं तत्कथालापं तद्गोष्ठीं परिवर्ज्जयेत् ।
ऋतुकालं विना मंत्री स्वस्त्रियं नाभिसंस्पृशेत् ॥५१॥
मवर्णञ्चैव पत्मारं तथा मौद्रं रसान्तरम् ।
कौटिल्यं क्षौरमभ्यंगमानिवेदित भोजनम् ॥५२॥
असंकल्पितकृत्यञ्च वर्ज्जयेन्मर्द्दनादिकम् ।
स्नायाच्च पञ्चगव्येन केवलामलकेन वा ॥५३॥
मंत्र जप्त्वा तु पानीयं स्नानाचमनभोजनम् ।
कुर्य्याद् यथोक्तविधिना त्रिसन्ध्यं देवतार्चनम् ॥
त्रिसन्ध्यमेव संकल्प वा न मंत्रं केवलं जपेत् ।
शक्त्या त्रिसवनं स्नानं शक्तौ द्वे सकृच्चवा ॥
अस्नातस्य फलं नास्ति न चातर्पयतः पितॄन् ।

अपवित्र करो नग्नः शिरोहसंप्रावृतोऽपि वा ।
प्रजपन्
~~प्रज~~ प्रजपेद् यावच्छावान्निष्फलमेमुच्यते ॥56॥

नारदीये —

मृदु नोग्रं सुपक्वञ्च कुर्यादीत्यपु भोजनम् ।
साधकः
तथा
नेन्द्रियाणां ~~यथा~~ ~~वृद्धि~~ वृद्धिस्तथा भुञ्जीत ~~साधकः~~ ॥57॥

कुलार्णवे —

यस्यान्नपानपुष्टाङ्गः कुरुते धर्म्म संचयम् ।
अन्नदातुः फलस्यार्द्धं कर्त्तुश्चार्द्धं न संशयः ॥
तस्मात् सर्व्वप्रयत्नेन ~~कर्त्तो दग्धौ प्रतिग्रहात्~~ ॥5
~~पुरश्चरणा~~ परान्नं वर्ज्जयेत सुधीः ॥58॥
पुरश्चरणकाले तु सर्व्वकर्मसु शंकरि ।
जिह्वा दग्धा परान्नेन करौ दग्धौ प्रतिग्रहात् ॥59॥
परस्त्रीभिर्मनो गच्छदं कथं सिद्धिर्व्वरानने ।
54॥ — वरान्नं यस्येतर विषयम् ।
न्ये शायां तस्य स्वत्वोत्पादनात् ॥60॥

55॥ तथा च

वैदिकाचारयुक्तानां शुचीनां श्रीमतां सताम् ।

सत्कुलस्थान जातान् शिष्टाचारान् जन्मनाम् ॥ ८१ ॥

विहाय वार्हं न हि वस्तु किञ्चिद् ग्राह्यं परेभ्यः सति सम्भ
असम्भवे तीर्थवारिर्विशुद्धात् पर्वातिरिक्ते प्रतिग्रहजाप्यात्
तथासमर्थोऽन्नोदनं विशुद्धाद् याचेच्च यावद्दिनमात्र भक्ष्यम्
गृह्णाति रागादधिकं न सिद्धः प्रजापते कल्पशतैरपुष्पम्

सकृदुच्चरिते शब्दे प्रणवं समुदीरयेत् ।
प्रारब्धे पारम्भे शब्दे प्राणायामं सकृच्चरेत् ॥८३॥

व्यु

के च ।
।
।
॥62॥

बहुप्रलापी आचम्य न्यस्यांगानि ततो जपेत् ।
क्षुतेऽप्येवं तथास्पृश्यस्थानानां स्पर्शनेऽपि च ।
प्रमादांश्च निरस्यान् पुरश्चरणकृच्चरेत् ॥64॥
विन्मूत्रोत्सर्गशंकादियुक्तः कर्म करोति यः ।
जपार्चनादिकं सर्वमपवित्रं भवेत् प्रिये ॥65॥
मलिनाम्बरकेशादि मुखदौर्गन्ध्य संयुतः ।
यो जपेत्तं दहत्याशु देवता गुप्तसंस्थिता ॥66॥
आलस्यं जृम्भणं निद्रां क्षुतं निष्ठीवनं भयम् ।
नीचाङ्गस्पर्शनं कोपं जपकाले विवर्जयेत् ॥67॥
स्वमुखावधानेन विलम्बं त्वरितं विना ।
उक्तसंख्यं जपं कुर्यात् पुरश्चरणसिद्धये ॥68॥
देवता गुरुमन्त्राणामैक्यं सम्भावयन् धिया ।
जपेदेकमना प्रातः कालं मध्यन्दिनावधि ॥69॥

~~मौनव्रते~~ —

यत्संख्यया समारब्धं तत् कर्त्तव्यमहर्निशम् ।
यदि न्यूनाधिकं कुर्याद् व्रतभ्रष्टो भवेन्नरः ॥70॥

गौतमीये —

न वीक्षेत पतितं व्रात्यं पिशुनं देव-निन्दकम् ।
तथा नाश्रमिनं विप्रं तथा विश्वविनिन्दकम् ॥ ७१ ॥

मुंडमालायाम् —

यत्संख्यया समारब्धं तज्जप्तव्यं दिने-दिने ।
न्यूनाधिकं न कर्त्तव्यमासमाप्तं सदा जपेत् ।
प्रजपेदुक्तसंख्यायाश्चतुर्गुणं जपः कलौ ॥ ७२ ॥

अन्यत्रापि —

कृते जपस्तु कल्पोक्तस्त्रेतायां द्विगुणो जपः ।
द्वापरे त्रिगुणः प्रोक्तश्चतुर्गुणं जपः कलौ ॥ 73 ॥

कुलार्णवेऽपि —

न्यूनातिरिक्तकर्माणि न फलन्ति कदाचन ।
यथाविधि कृतान्येव तत्कर्माणि फलन्ति हि ॥ ७४ ॥

भूशय्यां ब्रह्मचारित्वं मौनमाचार्यसेविता ।
नित्यं त्रिसवनं स्नानं क्षुद्रकर्मादि विवर्जनम् ।
नित्यपूजा नित्यदानं देवतास्तुति पूर्वकम् ।
नैमित्तिकार्चनञ्चैव विश्वासो गुरुदेवयोः ।
जपनिष्ठा द्वादशैते धर्माः स्युर्मन्त्रसिद्धिदाः ॥ ७५ ॥

स्त्री शूद्र पतित व्रात्यनास्तिकोच्छिष्टभाषणम् ।
असत्यभाषणञ्चैव जृम्भणं परिजपेत ।
एतेनापि न भाषेत जपहोमार्चनादिषु ।
अन्यथानुष्ठितं सर्वं सद्यस्येव निरर्थकम् ॥76॥
पुरश्चरणकाले तु यदि स्यान्मृतसूतकम् ।
तथापि कृतसंकल्पव्रतं नैव परित्यजेत् ॥77॥

योगिनीहृदये —

शयीत कुश शय्यायां शुचिवस्त्राधरः सदा ।
प्रत्यहं क्षालयेत् शय्यायां काली निर्भयः स्वपेत् ॥78॥
असत्यभाषणं वाच्यं कौटिल्यं परिवर्जयेत् ।
वर्जयेद् गीतवाद्यादि श्रवणं नृत्यदर्शनम् ॥79॥
अभ्यंगं गंधलेपनञ्च पुष्पधारणमेव च ।
त्यजेदुष्णोदके स्नानमन्यदेवप्रपूजनम् ॥80॥

तत्रैव —

नैकवासा जपेन्मंत्रं बहुवासास्तथापि वा ॥81॥

संहितायाम् —

विपर्यासं न कुर्याच्च कदाचिदपि योद्धः ।

ॐ

उपर्याधो वहिर्वस्त्रो पुरश्चरणकृन्नरः ।
विनियोगे विधाने तु भवेदानियमः क्वचित् ॥ ४२ ॥
पतितानामन्त्यजानां दर्शने भाषणे श्रुते ।
क्षुते हयो वायुगमने जृम्भने जपमुत्सृजेत् ॥ ४३ ॥
तथाचम्य च तत्राद्यौ प्राणायामः षडङ्गकम् ।
कृत्वा सम्यग् जपेद्देयं यद्वा सूर्यादि दर्शनम् ।
आदिशब्दाद्वह्निं ब्राह्मणश्च ॥ ४४ ॥

तंत्रान्तरे —

मनः संहरणं शौचं मौनं मन्त्रार्थचिन्तनम् ।
अव्यग्रत्वमनिर्वेदो जपसम्पत्तिहेतवः ।
उष्णीषी कञ्चुकी नग्नो मुक्तकेशो गणावृतः ।
अपवित्रकरोऽशुद्धः प्रलपन्न जपेत् क्वचित् ॥ ४५ ॥
अनासनः शयनो वा गच्छन् भुञ्जान एव वा ।
अप्रावृत्तकरौ कृत्वा शिरो वा प्रावृतोऽपि वा ।
चिन्ताव्याकुलचित्तो वा क्षुब्धो भ्रान्तः क्षुधान्वितः ।
रथ्यायामशिवस्थाने न जपेत् मारावृते ।
उपानद् गूढपादो वा यानशय्यागतस्तथा ।

प्रसार्य्या न जपेत् पादावुत्कटासन एव वा।
न यज्ञकाष्ठे न भूमौ नासने स्थितः।
मार्ज्जारं कुक्कुटं क्रौञ्चं श्वानं शूद्रं कपिं खरम्।
दृष्ट्वाचम्य जपेच्छेषं स्पृष्ट्वा स्नानं विधीयते।
सर्व्वत्र जपे अयं नियमः।
मानसे तु नियमो नास्त्येव ॥ ८६॥

तथान्व —

अशुचिर्वा हशुचिर्व्वापि गच्छंस्तिष्ठन् स्वपन्नपि।
मंत्रैकशरणो विद्वान् मनसैव सदाभ्यसेत्।
न दोषो मानसे जाप्ये सर्व्वदेशेऽपि सर्व्वदा ॥८७॥
श्यामादिजपे तु तत्प्रकरणे विशेषो द्रष्टव्यः ॥८८॥

अथ जपफलम्।

शिवधर्म्मे —

जपनिष्ठो द्विजश्रेष्ठोऽखिलयज्ञफलं लभेत्।
सर्व्वेषामेव यज्ञानां जायतेऽसौ महाफलम् ॥८९॥
जपेन देवता नित्यं स्तूयमाना प्रसीदति।
प्रसन्ना विपुलान् कामान् दद्यान्मुक्तिञ्च शाश्वतीम् ॥९०॥

यक्षरक्षः पिशाचाश्च ग्रहाः सर्पाश्च भीषणाः ।
जापिनं नोपसर्पन्ति भयभीताः समन्ततः ॥ ११ ॥

पद्मनारदीययोः —

यावन्तः कर्मयज्ञाः स्युः प्रतिष्ठादि तपांसि च ।
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥ १२ ॥
माहात्म्यं वाचिकस्यैतज्जपयज्ञस्य कीर्तितम् ।

तस्माच्छत गुणो पांशुः सहस्रो मानसः स्मृतः ॥९३॥

तथा च तंत्रे –

मानसः सिद्धि कामानां पुष्टि कामेरुपांशुकः ।
वाचिको मारणे चैव प्रसस्तो जप ईरितः ॥९४॥

गौतमीये –

शक्त्या त्रिसवनं स्नानमशक्तो द्विसकृच्चवा ।
त्रिसन्ध्यां प्रजपेन्मंत्रं पूजनञ्च समं भवेत् ।
सन्ध्यात्रये पूजां कृत्वा जपोष्ठोत्तरशतमित्यर्थः ॥९५॥
एकदा वा भवेत् पूजा जपेत्तु पूजनं विना ।
जपान्ते वा भवेत् पूजा जपान्ते वा जपेन्मनुम् ॥९६॥
प्रातः कालं समारभ्य जपेन्मध्यान्दिनावधि ।
मध्यान्दिनावधीति न नियमपरं किन्तुधिक कालव्य
वच्छेदपरम् ।
अन्यथा तत्समयजप नियमे कदाचित् जिवाया जाड्याजाड्येन
प्रतिपानियतजप संख्या
या अपूर्णत्वे अधिकारत्वे वा नियमभंगः स्यात् ॥९७॥
मनः संकल्प विषयान्मंत्रार्थगत मानसः ।

न द्रुतं न विलम्बञ्च जपेन्मौक्तिकहारवत् ॥९८॥
जपः स्यादक्षरावृत्तिर्मानसोपांशुवाचिकैः ।
धिया यदक्षरश्रेणीं वर्णस्वरपदात्मिकाम् ।
उच्चरेदर्थमुद्दिश्य मानसः स जपः स्मृतः ॥९९॥
जिह्वोष्ठौ चालयेत् किंचित् देवतागतमानसः ।
किंचित् श्रवणयोग्यः स्यादुपांशुः स जपः स्मृतः ॥१००॥
विशुद्धेश्वरतंत्रे —
निजकर्णागोचरो यः स जपो मानसः स्मृतः ।
उपांशुर्निजकर्णस्य गोचरः परिकीर्तितः ॥१॥
मंत्रमुच्चारयेद्वाचा स जपो वाचिकः स्मृतः ।
उच्चैर्जपोऽधमः ~~प्रोक्त~~ द्विशिष्ठः स्यादुपांशुर्दशभिर्गुणैः ॥२॥
जिह्वाजपः शतगुणः साहस्रो मानसः स्मृतः ॥३॥
तंत्रान्तरे
उच्चैर्जपोऽधमः प्रोक्त उपांशुर्मध्यमः स्मृतः ।
उत्तमो मानसो देवि त्रिविधः कथितो जपः ॥५॥
जिह्वाजपः स विज्ञेयः केवलं जिह्वया बुधैः ।
साहस्रो व्याधिहरश्च दीर्घो वसुक्षपः ।

अथवाऽक्षरसंपुटं जपेन्मौक्तिकहारवत् ॥५॥
मनसा यत् स्मरेत् स्तोत्रं वचसा वा अनुस्मरेत्।
उभयं निष्फलं याति भिन्नभांडोदकं यथा ॥६॥

गौतमीये —

पशुभावे स्थिता मंत्राः प्रोक्ता वर्णास्तु केवलाः।
सौषुम्न ध्वन्युच्चारिता प्रभुत्वं प्राप्नुवन्ति ते ॥७॥
मंत्राक्षराणि चितशक्तौ प्रोतानि परिभावयेत्।
तामेव परमव्योम्नि परमानन्द बृंहिते।
दर्शयत्यात्मसंभवं पूजाहोमादिभिर्विना ॥८॥

गौतमीये दशाक्षरपटले —

मूलमंत्रं प्राणबुध्या सुषुम्ना मूलदेशके।
मंत्रार्थं तस्य चैतन्यं जीवंध्यात्वा पुनः पुनः ॥९॥

कुलार्णवेऽपि —

मनोऽहन्यत्र शिवोऽहन्यत्र शक्तिरन्यत्र मारुतः।
न सिध्यति वरारोहे कल्पकोटिशतैरपि ॥१०॥
जातसूतकमादौ स्यादन्ते च मृतसूतकम्।
सूतकद्वयसंयुक्तो यो मंत्रः स न सिध्यति ॥११॥

गुरोस्तान्नहितं कृत्वा मंत्रं यावज्जपेद्यदा ।
सूतकद्वयनिर्मुक्तः स मंत्रः सर्वसिद्धिदः ॥१२॥
तत्रैव तस्माद्देवि प्रयत्नेन ध्रुवेण पुटितं मनुम् ।
अष्टोत्तरशतं वापि सप्तवारं जपादितः ।
जपान्ते च ततो जप्याच्चतुर्वर्गफलाप्तये ।
ब्रह्मबीजं मनोर्दत्वा चाद्यन्ते परमेश्वरी ।
सप्तवारं जपेन्मंत्रं सूतकद्वय मुक्तये ॥१३॥

मंत्राणां मंत्र बीजाश्च ये मंत्रा चैतन्यं योनिमुद्रां न वेत्ति य ।
शतकोटिजपेनापि तस्य सिद्धिर्न जायते ॥१४॥
लुप्त बीजाश्च ये मंत्राः न दास्यन्ति फलं प्रिये ।
मंत्रश्चैतन्यसहिताः सर्वसिद्धिकराः स्मृताः ॥१५॥
चैतन्य रहिता मंत्राः प्रोक्तवर्णास्तु केवलाः ।
फलं नैव प्रयच्छन्ति लक्षकोटिशतैरपि ॥१६॥
मंत्रोच्चारे कृते यादृक् स्वरूपं प्रथमं भवेत् ।
शते सहस्रे लक्षे वा कोटिजापेन तत्फलम् ॥१७॥
हृदये ग्रंथिभेदश्च सर्वावयववर्द्धनम् ।
आनन्दाश्रूणि पुलको देहावेशः कुलेश्वरि ।

18

गदगदोशक्तिश्च सहसा जायते नात्र संशयः ॥१८॥
सकृदुच्चारितेऽप्येवं मंत्रे चैतन्यसंयुते।
दृश्यन्ते प्रत्यया यत्र पारम्पर्यं तदुच्यते ॥१९॥
मासमात्रं जपेन्मंत्रं भूतलिप्यादि संपुतम्।
क्रमोत्क्रमात् सहस्रन्तु तस्य सिद्धो भवेन्मनुः ॥२०॥
तत्र भूतलिपि —
पञ्चह्रस्वाः संधिवर्णा व्योमेराग्निजलन्धराः।
अन्त्यमाद्यं द्वितीयञ्च चतुर्थं मध्यमं क्रमात् ॥२१॥
पञ्चवर्गाक्षराणि स्युर्वान्ताश्वेतर्दुभिः सह।
एषा भूतलिपिः प्रोक्ता द्विचत्वारिंशदक्षरा।
एवं जपं पुरा ~~सफलं तद्धि मार्ग्यैवं~~ कृत्वा तेजोरूपं समर्पयेत्।
देवस्य दक्षिणे हस्ते कुशपुष्पार्घ्यवारिभिः ॥२२॥
सफलं तद्धि मार्ग्यैवं प्राणायामं समाचरेत्।
जपस्यादौ जपान्ते च त्रितयं त्रितयं चरेत् ॥२३॥
शक्तिविषये देव्या वामहस्ते।
तथा च —
एवं ...

जपं समर्पयेद् देव्या वामहस्ते विचक्षणः ॥२४॥
जपान्ते प्रत्यहं देवि होमयेत्तद्दशांशतः।
तर्पणञ्चाभिषेकञ्च तत्तद्दशांशतो मुने ॥
प्रत्यहं भोजयेद्विद्वान् न्यूनाधिक्यप्रशान्तये।
अथवा सर्वसम्पूर्णे होमादिकर्म चाचरेत् ॥२५॥

मुंडमालायां -

यस्य यावान् जपः प्रोक्तस्तद्दशांश जपः क्रमात्।
तत्तद्द्रव्यैर्जपस्यान्ते होमं कुर्याद्दिने दिने ॥२६॥

तथा होमाद्युदशके च

यदङ्गं भवेद् भग्नं तत्संख्याद्विगुणो जपः।
होमाभावे जपः कार्यो होमसंख्याचतुर्गुणः ॥२७॥
अक्षणबेप्राणां क्षत्रियाणाञ्च स्वरसंख्या गुणः स्मृतः।
वैश्यानां वसुसंख्या क्रमेषां स्त्रीणामयं विधिः ॥२८॥
यत वर्णाश्रितः शूद्रः स च तस्य विधिञ्चरेत्।
अनाश्रितस्य शूद्रस्य दिक्संख्याकं समीरितः ॥२९॥
शूद्रस्य विप्रभृत्यस्य तत् पत्न्याः सदृशो जपः ॥३०॥

## अशाप्यशक्तौ योगिनीहृदये —

होमकर्मण्यशक्तानां विप्राणां द्विगुणो जपः ।
इतरेषान्तु वर्णानां सर्वेषां त्रिगुणो मतः । (कार्य्यः
त्रिगुण इति त्रिगुणादि होमसंख्यात्रिगुणजपः क्षत्रियेण)
वैश्येन चतुर्गुणः शूद्रेण पञ्चगुणः ॥ ३१ ॥

### तदुक्तं कुलप्रकाशे —

पदपदं विहीनं स्यात्तत् संख्याद्विगुणो जपः ।
कुर्वीत त्रिचतुः पञ्च यथासंख्यं द्विजातयः ।
एतेन सर्वो शूद्राणां होमाधिकारः ॥ ३२ ॥
तथा च शूद्राणां त्र्यस्रमीरितमिति कुण्डप्रकरणे सारदायां
स्त्रीणां होमाधिकारश्च ।

### तत्रैव —

लाजैस्त्रिमधुरोपेतैर्होमं कन्या प्रयच्छति ।
अनेन विधिना कन्या वरमाप्नोति वाञ्छितम् ।
अतएव स्त्रीणां होमाधिकारः स च ब्राह्मणद्वारा ॥ ३३ ॥

### तथा च तन्त्रान्तरे —

ॐकारोच्चारणाद्धोमात् शालग्रामशिलार्चनात् ॥
ब्राह्मणीगमनाच्चैव शूद्रश्चाण्डालतामियात् ।

— शूद्र

इति स्वाक्षाद्विष्णुक्तम् ।

तथा —

स्त्रीणामपि सर्व्ववैदिक कर्म्मसु शूद्रतुल्यत्वप्रतिपादनात् ।
स्त्रीशूद्रकरसंस्पर्शो वज्रपातो समोपदि इति भगवद्वचनात् ।
नृसिंहतापनीयेऽपि सावित्रीं प्रणवं यजुर्लक्ष्मीं
स्त्रीशूद्रयोर्नेच्छन्तीति पर्य्यन्तं
. पराशरभाष्येऽपि गोविन्दभट्टधृतम् ।
स्वाहा प्रणवसंयुक्ते शूद्रे मंत्रं ददद्द्विजः ।
शूद्रो निरयमाप्नोति ब्राह्मणो यात्यधोगतिम् ।

यजुर्वेदः —

लक्ष्मी श्रीबीजमित्यर्थः ॥३५॥

तथा नारायणकल्पेऽपि —

अष्टाक्षरो महामंत्रः सप्तार्णः शूद्रयोषितः ।
प्रणवादिश्च यो मंत्रो न स्त्रीशूद्रे प्रशस्यते ।
इति सर्व्व स्त्रीणां शूद्रवद्व्यवहारः ॥३६॥
शूद्रस्यापि होमकर्म्माणि स्वकर्तृकहोम इति केचित्

तथा च वाराहीतन्त्रे —



यदि कामी भवत्यत्र शूद्रोऽपि होमकर्म्मणि।
वन्हिजायां परित्यज्य हृदयान्तेन होमयेत्॥३७॥
सर्व्वेषां द्विगुणजपः।

तथा वाराहीतन्त्रे तत्संख्या
यद्यदङ्गं विहीयेत तत्संख्याद्विगुणो जपः।
कर्त्तव्यश्चाङ्गसिद्ध्यर्थं तदशक्तेन भक्तितः॥३८॥
न चेदङ्गं विहीयेत तद्विशेषम् वान्नुयात्।
विप्र भोजन मात्रेण व्यङ्गं साङ्गं भवेद्ध्रुवम्॥
(३९) यद्यद् भुङ्क्ते द्विजः साक्षात् तद्भुङ्क्ते हरि स्वयं॥

३५॥

तथागस्त्यसंहितायां —
यदि होमेऽप्यशक्तः स्यात् पूजायां तर्पणेऽपि वा।
तावत्संख्या जपैर्वा ब्राह्मणाशनेन च।
भवेदङ्गं ह्युपैनेव पुरश्चरण मार्ग्गे वै॥४०॥

वीरतंत्रे —
नियमः पुरुषे ज्ञेयो न योषित्सु कथञ्चन।
न न्यासो योषिता मत्र न ध्यानं न च पूजनम्।
केवलं [illegible] तासाम्॥४१॥

आचार्य्यमते विप्रभोजनेह्यनुकल्पः ।

तथा च मुण्डमालायाम् —

पादपूजाद्यशक्तश्चेद् दद्याद् भावेन सुन्दरि ।
केवलं जपमात्रेण पुरश्चर्या विधीयते ।
कलौ ब्राह्मणभोजनमावश्यकमेव ।
सर्वेषां भोजयेद् विद्वान् कृतसंकल्पसिद्धये ।
विप्राराधनमात्रेण व्यङ्गं साङ्गं भवेद् ध्रुवम् ॥५२॥

कुलार्णवे —

दीक्षाहीनान् पशून् यस्तु भोजयेद्वा स्वमन्दिरे ।
स याति परमेशानि नरकानेकविंशतिम् ॥५३॥
एवं यः कुरुते देवि पुरश्चरणकं प्रिये ।
सर्वपापविनिर्मुक्तो देवीसायुज्यमाप्नुयात् ॥५४॥

तथा —

तद्दशांशेन विप्रांश्च कौलिकानपि भोजयेत् ।
क्षीरखण्डाद्यभोज्यैश्च बहुमानपुरःसरम् ॥५५॥

ततश्च — गुरवे दक्षिणां दद्याद् भोजनाच्छादनादिभिः ।
गुरुसन्तोषमात्रेण सर्वसिद्धिर्भवेद् ध्रुवम् ।

गुरोरभावे तत् पुत्राय तत् पत्न्यै वा निवेदयेत्।
तयोर भावे देवेशि ब्राह्मणेभ्यो निवेदयेत् ॥५६॥
साधक सिद्धैकमंत्रस्य पञ्चाङ्गोपासनेन च।
सर्वे मंत्राश्च सिद्ध्यन्ति तत्प्रसादात् कुलेश्वरि॥५७॥
गुरुमुलमिदं सर्वमित्याहुस्तंत्रवेदिनः।
एकग्रामे स्थितो नित्यं गत्वा वन्देत वै गुरुम्।
गुरुरेव परम ब्रह्म तस्मादादौ तमर्च्चयेत्।
तदन्ते महतीं पूजां कुर्य्यात् साधकसत्तमः।
सुवासिनीं कुमारीश्च भूषणैरपि भूषयेत्।
मिष्ठानं बहुशः (बलुशः) कार्य्यं भुंजीत बन्धुभिः सह।
एवं सिद्धमनुर्मंत्री साधयेत् सकलेप्सितान् ॥५८॥

## मतान्तरे पुरश्चरणविधिः +

~~अथवान्यप्रकारेण~~ तंत्रे ~~तंत्रान्तरे~~ —

अथवान्यप्रकारेण पुरश्चरणमुच्यते।
ग्रहणेहर्कस्य चेन्दोर्वा शुचिः पूर्व्वमुपोषितम्।
नद्यां समुद्रगामिन्यां नाभिमात्रोदके स्थितः।
स्पर्शादि मुक्ति पर्य्यन्तं जपेन्मंत्रमनन्यधीः ॥५९॥

यदि नक्रादि दूषिता नदी भवति तदा यत् कर्त्तव्यं तदाह रुद्रयामले—

अपि शुद्धोदके स्नात्वा शुचौ देशे समाहितः।
ग्रासादि मुक्तिपर्यन्तं जपेन्मंत्रमनन्यधीः।
इति कृत्वा न सन्देहो जपस्य फलभाग् भवेद् ॥५०॥

नद्यभावे—

यद्वा पुण्योदके स्नात्वा शुचि पूर्व्वमुपोषितः।
ग्रहणादि मोक्षान्तं जपेन्मंत्रं समाहितः ॥५१॥

उपवासासमर्थो तु तत्रैव—

अथवान्यप्रकारेण पौरश्चारणिको विधिः।
चन्द्रसूर्य्योपरागे च स्नात्वा प्रयतमानसः।
स्पर्शनादि विमोक्षान्तं कुर्य्या जपेमंत्रं समाहितः।
जपाद्दुशांशेन कुर्य्याद् ब्राह्मण भोजनम्।
एवं कृत्वा तु मंत्रस्य जायते सिद्धिरुत्तमः ॥५२॥

गोपालमंत्र तर्पणे तु होमसंख्यत्वम्।

यथा—

इह गोपालमंत्राणां तर्पणं होमसंख्यया इत्यादि ॥५३॥

दृष्ट्वा स्नात्वा संकल्पे विमोक्षान्तं जपं चरेत् ।
तावत् यज्ञादिकं कुर्यात् ग्रहणान्ते शुचि पुमान् ।
एवं जपान्मन्त्रसिद्धिर्भवतीव न संशयः ॥ 54 ॥
ग्रहणे जपस्यावश्यकत्वम् ।
श्राद्धादेरनुरोधेन यदि जपं त्यजेन्नरः ।
स भवेद्देवताद्रोही पितॄन् सह नयत्यधः ॥
इति सनत्कुमारवचनात् ।
वस्तु तस्तु आरब्ध पुरश्चरण विषयमिदम् ॥ 55 ॥
तथा हि —
आरब्धे पुरश्चरणे यदि ग्रहणं भवेदत्तदा
श्राद्धाद्यनुरोधेन जपं न त्यजेत् ।
एवं रात्रावपि पुरश्चरण विशेषं
बोद्धव्यमिति सर्वसम्मतम् ॥ 56 ॥
योगिनी हृदये —
कल्पोक्तविधिना मंत्री कुर्याद्धोमादिकं ततः ।
अथवा तद्दशांशेन होमादींश्च समाचरेत् ॥ 57 ॥

लक्षा -

अनन्तरं दशांशेन क्रमाद्धोमादिकञ्चरेत् ।
तदन्ते महतीं पूजां कुर्य्याद् प्रसीदति ॥58॥

क्रियासारे —

दीक्षाहीनान् पशून् यस्तु भोजयत्स्वमन्दिरे ।
स याति परमेशानि नरकानेकविंशतिम् ॥59॥

यद्यपि पुरश्चरणमिदं पञ्चाङ्गपरं तथा च —

जपहोमौ तर्पणञ्चाभिषेको विप्रभोजनम् ।
पञ्चाङ्गोपासनं लोके पुरश्चरणमुच्यते ।
तथापि ग्रहणादौ पुरश्चरणपदं गौणं जपमात्रपरम् ।
सूर्य्योदयात् समारभ्य यावत् सूर्य्योदयावधि ।
तावज्जप्तो महेशानि पुरश्चरणमिष्यते ।
इत्यादौ तथा दर्शनात् ॥60॥

तत्र होमादेरभावात्तर्हि कथं

ग्रहणपुरश्चरणे होमादिरिति चेद्वचनादेव जायते ।
न च पुरश्चरणस्य पञ्चांगत्वात् सर्व्वत्र
तदेव स्यादिति वाच्यं ग्रहणे तद्विधानमनर्थकं स्यात् ।
किञ्च ग्रहणे होमादिनियमाभावान्यत्र होमादिः +

ग्रहण पुरश्चरणे होमादिविधानन्तु प्रकृतिभूतपञ्चाङ्गपुरश्चरणतुल्यत्वबोधनाय
अतएव ग्रहणे पञ्चाङ्ग स्वरूप पुरश्चरणे कृते मुख्यप्रयोगेऽप्यधिकार इति प्रकृती कृतम्।
तदकरणे केवल जपमात्रपुरश्चरणे नाधिकार इति सर्वसम्मतमिति ॥61॥

## पुरश्चरणकालस्तु वाराहीतंत्रे —

चन्द्रतारानुकूले च शुक्लपक्षे शुभेऽहनि ।
आरभेत पुरश्चर्यां हरौ सुप्ते न चाचरेत् ।
ग्रहणे च महातीर्थे न कालमवधारयेत् ॥62॥

## प्रतिप्रसवस्तु रुद्रयामले —

कार्त्तिकाश्विन- वैशाखे- माघेऽथ मार्गशीर्षके ।
फाल्गुने श्रावणे दीक्षा पुरश्चर्या प्रशस्यते ।
ग्रहणे च महातीर्थे न कालमवधारयेत् ॥63॥
ग्रस्तास्ते ग्रस्तोदये दीक्षापुरश्चरण योर्निषेधमाह।

## तंत्रान्तरे —

ग्रस्तास्ते ह्युदिते नैव कुर्यात दीक्षाजपं प्रिये ।
कृते नाशो भवेदायुरायु: श्रीसुतसम्पदाम् ॥64॥

## अथ पुरश्चरण प्रयोग: ।

तत्र ... पुरश्चरण प्राक् -

तृतीयदिवसे क्षौरादिकं विधाय वेदिकापारचतुर्दिक्षु क्रोशं क्रोशद्वयं वा चतुरस्रं आहारादिविहारार्थं परिकल्प्यं तत्र कुम्भचक्रानुरूपं मंडपं विधाय रंगकाभकल्पं कुर्य्यात ।

ततपरदिने स्नानादिकं विधाय शुद्धः सन् वेदिका पारचतुर्दिक्षु अश्वत्थोडुम्बरप्लक्षाणामन्यतमस्य वितस्तिमात्रान दशकिलकान ॐ नमः सुदर्शनाय अस्त्राय फट् इति मंत्रेण अष्टोत्तरशताभिमंत्रितान वेदिकायां दद्यादतु ॐ ये चात्र विघ्नकर्त्तारो भुवि दिव्यन्तरीक्षगाः ।
विघ्नभुताश्च ये चान्ये मम मंत्रस्य सिद्धिषु ।
मयैतत कीलितं दैत्यं परित्यज्य विदूरतः ।
अपसर्पन्तु ते सर्व्वे निर्व्विघ्नं सिद्धिरस्तु ।
इत्यनेन निरवन्य तेषु,
ॐ नमः सुदर्शनाय अस्त्राय फट् इति अस्त्रं संपूज्य तेषु पूर्व्वादिक्रमेण इन्द्रयादि लोकपालान पूजयेत ।

यथा —

ॐ भूर्भुवः स्वः इन्द्रियादिलोकपाल इहागच्छ इत्यावाह्य पञ्चोपचारैः पूजयेत् ।

एवं क्रमेण अन्यानपि पूजयेत् ॥ ६५ ॥

तथा च मुन्डमालायाम् —

पुण्याहवाचनादिकं कृत्वा कुर्याद्भूमिपरिग्रहम् ।

तथा ह्यमुकमंत्रस्य पुरश्चरणसिद्धये ।

मयेयं गृह्यते भूमिकर्मण्योऽयं सिध्यतामिति ।

तथा च

ग्रामे क्रोशमितं स्थानं नद्यादौ स्वच्छयाभितम् ।

नगरादावपि क्रोशं क्रोशयुग्मयापि वा ।

क्षेत्रं वा यावदिच्छन्तु विहारार्थं प्रकल्पयेत् ।

आहारादिविहारार्थं तावती भूमिमाक्रमेत ।

क्षीरिवृक्षोद्भवान् कीलान् अस्त्रमंत्राभिमंत्रितान् ।

निखनेद्दशदिक्भागे तेष्वस्त्रमन्त्र प्रपूजयेत ।

लोकपालान् पुनस्तेषु गन्धाद्यैः पूजयेत् सुधीरिति ॥ ६६ ॥

ततो मध्यस्थाने क्षेत्रपालं वास्त्वीशञ्च संपूज्य

[illegible] गणपतिं पूजयेत् ।

पक्षा —

ॐ अद्येत्यादि मत्कर्त्तव्यामुक मंत्र पुरश्च कर्म्माणि
सर्वविघ्नविनाशार्थं गणेशपूजामहं करिष्ये।
इति संकल्प्य वेदिकामध्ये पञ्चोपचारैर्गणं पूजयेत्॥

तदुक्तम्

~~क्षेत्र बलिं दद्यात्ततः क्षेत्रं समाविशेत्~~ । X

ततो माषभक्तादिना भूमिदेवताभ्यो बलिं दद्यात्।
ॐ ये रौद्रा रौद्रकर्म्माणो रौद्रस्थाननिवासिनः।
मातरो ह्युग्ररूपाश्च गणाधिपतयश्च ये
विघ्नीभूताश्च ये चान्ये दिग्विदिक्षु समाश्रिता
सर्वे ते प्रीतमनसः प्रतिगृह्णन्त्विमं बलिम्।
इत्यनेन दशदिक्षु भूतेभ्यो बलिं दद्यात्।
ततो गायत्रीं जपेत्।

तथा च —

प्रातः स्नात्वा तु गायत्र्याः सहस्रं प्रयतो जपेत्।
ज्ञाताज्ञातस्य पापस्य क्षयार्थं प्रथमं ततः।
विप्रान् सम्पूजयेद्धूपैर्गन्धाच्छादनासनैः।
वहुभिर्भक्ष्यभक्षाभिः संपूज्य गुरुमात्मनः।

(margin) पञ्चपात्र्याद्ये तत्र पुंजयोर्द्धिं वन्तत:।
ततोऽसम ब्राह्मणानां विकलायां समर्पयेत्।
विकल्पान्तरे बलिं दद्यात् ततः क्षेत्रं समाविशेत्।

आरभेत जपं पश्चात्तदनुज्ञा पुरः सरीमिति ।
अनुस्तम्भे देवतायाः यथा गोविन्दवृन्दावने —
जपात् पूर्वं जपेत् कृष्णगायत्रीं सर्वपापहाम् ।
अयुतैक प्रमाणेन एनसो न्यून हेतवे ।
इति कृष्णगायत्रीस्वरसादन्यत्रापि तथा
अतएव स्त्रीशूद्रसाधारणमिति माध्वाचार्यः
यच्च प्रातः स्नात्वा तु सावित्र्या अयुतं प्रयतो
जपेदिति तत्पुनरुत्पन्न पापाशङ्कया ।
अद्येत्यादि अमुकगोत्रः अमुकशर्मा ज्ञाताज्ञातपाप-
क्षयकामः अष्टोत्तर सहस्र सावित्रीजपमहं करिष्ये ।
इति संकल्प्य जपेत् ।
ततः उपवासं हविष्यं वा कुर्यात् ।
परदिने उषसि स्नानादिकं कृत्वा
स्वस्तिवाचनपूर्वकं संकल्पं कुर्यात् ॥ ६८।
ॐ अद्येत्यादि अमुकगोत्रः श्रीअमुकदेवशर्मा
अमुकदेवतायाः अमुकमन्त्रसिद्धिप्रतिबन्धकाशे-
षदोषनिरसनपूर्वकं तन्मन्त्रसिद्धिकामोऽहमद्यारभ्य

67 ॥

यावत्कालेन सेत्स्यति तावत्कालं अमुकमंत्रस्य इष्ट-संरक्षक-जप-तद्दशांशहोम-तद्दशांशतर्पण-तद्दशांशाभिषेक-तद्दशांश-ब्राह्मणभोजनरूप-पुरश्चरणमहं करिष्ये इति संकल्प्य भूतशुद्धिप्राणायामादिकं कृत्वा स्वस्वमुद्रां बद्ध्वा स्वस्ववक्ष्यमाणक्रमेण देवतां संपूज्य दीपे प्रज्वलिताकारां देवतां हृदये कृत्वा प्रातःकालमारभ्य मध्यन्दिनं यावत् जपः कुर्यात् ।

तता होमस्ततस्तर्पणम् ॥69॥

कुलार्णवे —

तर्पणन्तु ततः कुर्यात्तोयाद्यैश्चन्द्रमिश्रितैः ।
जले देवं समावाह्य पाद्याद्यैरुदकात्मकैः ।
संपूज्य विधिवद्भक्त्या परिवारसमन्वितम् ।
एकैकमञ्जलिं तोयं परिवारान् प्रतर्पयेत् ।
ततो होमदशांशेन तर्पयेत् परदेवतां ।
तर्पणवाक्यन्तु स्नानप्रकरणे वक्तव्यम् ॥70॥

अथाभिषेकवाक्यन्तु —

नमोऽहं मुच्चार्य, अमुकदेवतामहमभिषिञ्चामि इति

कलसमुद्रया स्वमुर्द्धि अभिषेचयेत् ।

तथा गौतमीये —

नमोऽन्तं मूलमुच्चार्य तदन्ते देवताभिधाम् ।
द्वितीयान्तामहं पश्चादभिषिञ्चाम्यनेन तु ।
अभिषिञ्चेत् स्वमूर्द्धानं तोयैः कुम्भमुद्रया ॥७॥

शारदाविषये गौतमतन्त्रे —

मूलान्ते नाम चोच्चार्य सिञ्चामीति नमः पदमिति ।

ततो ब्राह्मणान् भोजयित्वा दक्षिणां कुर्यात् —

ॐ अद्येत्यादि कृतैतदमुकदेवताया अमुकमन्त्र-पुरश्चरणकर्मणः साङ्गतार्थं दक्षिणामिदं काञ्चनं वह्निदैवतं अमुकगोत्राय गुरवे तुभ्यमहं संप्रददे । ततोऽच्छिद्रावधारणं कुर्यादिति पुरश्चरणप्रयोगः ॥१२

अथ ग्रहणपुरश्चरणसंकल्पः तद्यथा —

ॐ अद्येत्यादि राहुग्रस्ते दिवाकरे निशाकरे वा अमुकगोत्रः श्री अमुकदेवशर्म्मा अमुकदेवताया अमुकमन्त्रसिद्धिकामो ग्रासादिमुक्तिपर्यन्तं अमुकमन्त्रजपरूप पुरश्चरणमहं करिष्ये ।

इति सङ्कल्प्य जपेत् ।

ततस्साद्विने तत्परदिने वा स्नानं विधाय
ॐ अद्येत्यादि अमुमंत्रस्य कृतैतद् ग्रहण कालीन-
इयत् - संख्यक - जप - तद्दशांश - होम - तद्दशांश
तर्पण - तद्दशांशाभिषेक - तद्दशांश - ब्राह्मण -
भोजन कर्माहम् करिष्ये इति संकल्प्य
होमादिकं कर्म कृत्वा पूर्ववत् दक्षिणादिकं
कुर्यादिति पुरश्चरण प्रयोगः ॥73 ॥

## अथ कूर्मचक्रम —

दीपस्थानं समाश्रित्य कृतं कर्म फलप्रदम् ।
दीप्यते पुरुषो यत्र दीपस्थानं तदुच्यते ॥75॥
चतुरस्रां भुवं भित्त्वा कोष्ठानां नवकं लिखेत् ।
पूर्वकोष्ठादि विलिखेत् सप्तवर्गाननुक्रमात् ।
लक्षमीशो मध्यकोष्ठे स्थान् युग्मक्रमाल्लिखेत् ।
दिक्षु पूर्वकोष्ठादि विलिखेत् क्षरत्यास्थितिः ।
मुखन्तु तस्य जानीयात् हस्तावुभयतः स्थितौ ।
कोष्ठे कुक्षी उभे पादौ द्वे शिष्टं पुच्छमीरितम् ।

क्रमेणानेन विभजेन्मध्यस्थमपि भागतः ॥75॥
मुखस्थो लभते सिद्धिं करस्थाः स्वल्पजीविनः।
उदासीनः कुक्षिसंस्थः पादस्थो दुःखमाप्नुयात् ॥76॥
पुच्छस्थः पीड्यते मंत्री बन्धनोच्चाटनादिभिः।
कूर्म्मचक्रमिदं प्रोक्तं मंत्रिणां सिद्धिदायकम् ॥77॥

पिङ्गलायाम् —

कूर्म्मचक्रमविज्ञाय यः कुर्याज्जपयज्ञकम्।
तस्य यज्ञफलं नास्ति सर्व्वानर्थाय कल्पते ॥78॥

कूर्म्मचक्रम्।

# अथ मंत्राणां दशसंस्काराः।

गौतमीये —

जननं जीवनं पश्चात्ताडनं बोधनस्तथा।
अथाभिषेको विमलीकरणाप्यायने पुनः।
तर्पणं दीपनं गुप्तिर्दशैता मंत्रसंस्क्रियाः ॥ 79 ॥
स्वर्णादि पात्रे संलिख्य मातृका पत्रमुत्तमम्।
काश्मीरचन्दनेनापि भस्मना वाथ सुव्रते।
काश्मीरं शक्तिसंस्कारे चन्दनं वैष्णवे मनौ।
शैवे भस्म समाख्यातं मातृका पत्रलेखने ॥ 80 ॥

अथ मातृका-यन्त्रम् —

व्योमेन्दोरसनार्णकर्णिकमचाप द्वन्द्वै स्फुरत्केशरम्
वर्गोल्लासि वसुच्छदं वसुभालिगेहेन संवेष्टितम्।
आसास्वांतबुभान्तवाङ्कलिपुज क्षौणि पुरेणावृतम्
यन्त्रं वर्णतनोः परं निगदितं सौभाग्यसम्पत्करम् ॥
मंत्रस्य दिक्षु यं विदिक्षु वं लिखेत् ॥ 81 ॥

तथा च गौतमीये —

कादिमान्ताः पञ्चवर्गा दिक्षु पूर्व्वादितो न्यसेत्।
यादिवान्ताः शादिहान्ताः लक्षमीशे प्रागिन्यसेत।

चतुरस्र चतुर्द्वारं दिक्षु वं वं विदिक्षु च

इति मातृका यंत्रम् ॥ ८२ ॥

मातृका यंत्रम् ।

---

मंत्राणां मातृका यंत्रादुद्धारो जननं स्मृतम् ।
पङ्क्तिक्रमेण विधिना मुनिभिस्तन्निश्चितम् ।
प्रवालीरितान् कृत्वा मंत्रवर्णान् जपेत् सुधीः ।
प्रत्येकं शतवारञ्च जीवनं तदुदाहृतम् ।
दशसंख्यो वा जाप ॥ 83 ॥

## विश्वसारे तंत्रे —

दश्वाध्यातृणु देवेशि ताडनं परिकीर्तितम् ॥
विलिख्य मंत्रवर्णास्तु प्रसूनैः करवीरजैः ।
एकैकपल्लवे सिंच्येन्मंत्री मंत्रार्णसंख्यया ॥ ८७ ॥
संचिन्त्य मनसा मंत्रं सुषुम्नामूलदेशतः ।
ज्योतिर्मंत्रेण विधिवद् दहेन्मत्रवयं यतीं ॥ ८८ ॥
तारं व्योमाग्नि मनुयुग्दण्डी ज्योतिर्मनुर्मतः ।
तारं प्रणवं । व्योम हकारः । अग्निरेफः ।
मनुरौकारः । दण्डी अनुस्वारः । तेन ॐ ह्रौं ॥ ८९ ॥
स्वर्णेन कुशतोयेन पुष्पतोयेन वा तथा ।
तेन मंत्रेण विधिवद्याप्यायनविधिः स्मृतः ॥ ९० ॥
मंत्रेण वारिणा मंत्रे तर्पनं तर्पणं मतम् ॥ ९१ ॥
मधुना शाक्तमंत्रेषु वैष्णवे चेन्दु मज्जलैः ।
शैवे घृतेन दुग्धेन तर्पणं सम्यगीरितम् ॥
अभिषेकेऽपि तथा ॥ ९२ ॥
तारमायारमा योगो मंत्रे दीपनमुच्यते ।
जप्यमानस्य मंत्रस्य गोपनं त्वप्रकाशनम् ॥ ९३ ॥
संस्कारा दश संप्रोक्ताः सर्वतंत्रेषु गोपिताः ।

तन्मंत्रवर्णसंख्याकैरश्वत्थपल्लवैर्बोध्यनम् ॥ ८६ ॥
तत्तन्मंत्रोक्तविधिना अभिषेकः प्रकीर्तितः ।

यान् कृत्वा साम्प्रदायेन मंत्री वाञ्छितमाप्नुयात् ॥ ९४ ॥
मायिकं कार्म्मणञ्चेति।
मलत्रयमिति ज्ञानव्यं तद्रूपं प्राक् निरूपितं तन्मलत्रयम्।

प्रपञ्चसारे —

मायिकं नाम गोत्रोक्तं पौरुषं कार्म्मणं मलम्।
ज्ञानवं तद्रूपं प्राक् निरूपितं तन्मलत्रयम् ॥ ९५ ॥
X तारमायारमाबीजपुटितेन जपेन्मनुम् । X
तारमायारमायोग इति तारमायारमाबीज पुटितम्
मंत्र मष्टोत्तरशतं जपेदित्यर्थः ।

तथा च विश्वसारे —

तारमायारमाबीजपुटितेन जपेन्मनुम् ।
शतमष्टोत्तरञ्चैव दीपयेत् साधकोत्तमः ॥ ९६ ॥

अथ क्रमावती दीक्षा प्रयोगः ।

शिष्यः पूर्व्वमुपोषितः कृतनित्यक्रियः स्वस्तिवाचन पूर्व्वकं संकल्पं कुर्य्यात् ।

तद्यथा —

ॐ अद्येत्यादि अमुकगोत्रः श्री अमुकशर्म्मा धर्म्मार्थ-
काममोक्ष प्राप्तिकामः अमुकदेवताया अमुकाक्षर

मंत्रदीक्षामहं करिष्ये इति संकल्प्य गुरुः वृणुयात्
ॐ साधु भवानास्तां, ॐ साध्वहमासे इति ।
ॐ अर्च्चयिष्यामो भवन्तं, ॐ अर्च्चय इति ।
ततो गन्धपुष्पवस्त्रालंकारादिभिर्गुरुमभ्यर्च्च्य दक्षिणं
जानुं ~~अनु~~ धृत्वा पठेत् ।

ॐ अद्येत्यादि अमुकगोत्रः श्री अमुकदेवशर्म्मा
अमुकदेवताया मत्कर्तृकामुकाक्षर मंत्रदीक्षाकर्म्मणि
अमुकगोत्रं श्री अमुकदेवशर्म्माणमेभिः गन्धादि-
भिरभ्यर्च्च्य गुरुत्वेन भवन्तमहं वृणे, ॐ ~~वृतोऽस्मि~~

ॐ वृतोऽहस्मीत्युत्तरम् ।

यथाविहितं गुरुकर्म्म कुरु, यथा ज्ञानतः करवाणीति
प्रतिवचनम् । ततो गुरुराचम्य ह्यादिरो सामान्यार्घ्यं कुर्यात् ।

तद्यथा—

स्ववामे त्रिकोणवृत्तभूविम्बं विलिख्य,
ॐ आधारशक्तये नमः इति संपूज्य,
फडिति मंत्रेण मात्रं प्रक्षाल्य,
साधारं शंखं तत्र विधाय, नम इति मंत्रेण जलेनापूर्य,

अंकुशमुद्रया, ॐ गंगे चेत्यादिना सूर्यमंडलात्तीर्थमावाह्य,
प्रणवेन गन्धादीन्निक्षिप्य, धेनुमुद्रां प्रदर्श्य,
ऊर्मित्यष्टधा जप्त्वा, दशधाभिमंत्रयेत् ॥९७॥

तथा च. —

त्रिकोणवृत्तभूबिम्बमंडलं रचयेत्ततः।
आधारशक्तिं संपूज्य तत्राधारं विनिक्षिपेत्।
अस्त्रेण पात्रं संशोध्य हृन्मंत्रेण प्रपूरयेत्।
निःक्षिपेत्तीर्थमावाह्य गन्धादीन् प्रणवेन तु।
दर्शयेद्धेनुमुद्रां वै सामान्यार्घ्यमिदं स्मृतम्।
इति गौतमीयवचनात् अष्टधा प्रणवजपः विशेषार्घ्य
शङ्कायां तु दशधा तदर्घ्यो तथादर्शनात्। तथादर्शनात्।
पात्रं तोयैः प्रपूर्य्याथ प्रणवं दशधा जपेत् इति भैरवीयात् ॥९८॥
फडिति तज्जलेन द्वारमभ्युक्ष्य द्वारपूजां कुर्यात्।

तदयथा —

उदुम्बरे ॐ विघ्नाय नमः।
दक्षिणशाखायां ॐ क्षेत्रपालाय नमः।
तयोः पार्श्वे ॐ गंगायै नमः। ॐ जमुनायै नमः।

देहल्यां ॐ अस्त्राय नमः। इति क्रमेण चतुर्द्वारं पूजयेत्।

निबन्धे —

द्वारं मन्त्राम्बुभिः प्रोक्ष्य द्वारपूजां समाचरेत्।
ऊर्ध्वोडुम्बरके विघ्नं महालक्ष्मीं सरस्वतीम्।
ततो दक्षिणशाखायां विघ्नं क्षेत्रशमन्यतः।
तयो पार्श्वद्वये गंगायमुने पुष्पवारिभिः।
देहल्यामर्च्चयेदस्त्रं प्रतिद्वारमिति क्रमात्।
अशक्तश्चेद्द्वारदेवताभ्यो नमः इत्येतावन्मात्रम्॥९९॥
गणेशं क्षेत्रपञ्च योगिनीं वटुकन्तथा।
गंगाञ्च यमुनाञ्चैव लक्ष्मीं वाणीं ततो जपेत्।
इति विशेषः॥१००॥

वैष्णवे च —

नन्दः सुनन्दश्चण्डश्च प्रचण्डो बल एव च।
प्रबलो भद्रनामा च सुभद्रो विघ्नवैष्णवाः।
प्रणवादिनमोहस्तेन नाममन्त्रेण पूजयेत्॥१॥
ततो दक्षिणपादप्रक्षेपपुरः सरं वामशाखां स्पृशन् दक्षिणाङ्ग
सङ्कोचयन् मंडप्रान्तः प्रविश्य नैर्ऋत्यां वास्तुपुरुषाय

नमः ॐ ब्राह्मणो नमः इति प्रजपेत् ।
ततो देपमंत्रेणादिव्यदृष्ट्यावलोकनात् दिव्यान्
विघ्नानुत्सार्य्य अस्त्राय फट् इति मंत्रेणजलेनान्त-
रिक्षगान् विघ्नानुत्सार्य्य वामपार्ष्णिघातत्रयेण भौमान्
विघ्नानुत्सार्य्य फाड़िलि सप्तजहान विकिरनादाय-
ॐ अपसर्पन्तु ते भूता ये भूता भूमि संस्थिताः ।
ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञाया ।
इति विकिरेत् ॥२॥
लाजचन्दनसिद्धार्थ भस्मदूर्वांकुशाक्षताः ।
विकिरा इति संदिष्टाः सर्व्वाविघ्नोघनाशकाः ॥३॥
यथा —
अनन्तरं देशिकेन्द्रो दिव्यदृष्ट्यावलोनैः ।
दिव्यानुत्सारयेत् विघ्नान् अस्त्राभिरन्तरीक्षगान् ।
पार्ष्णिघातैस्त्रिभिर्भौमान् इति विघ्नान्निवारयेत् ॥४॥
ततो अक्षतान् समादाय दक्षे नाराचमुद्रया ।
प्रक्षिपेदस्त्रमंत्रेण गृहान्तर्विघ्नशान्तये ।
अपसर्पन्तु ते इति शारदोपात ॥५॥

## सम्मोहनतंत्रे —

विकिरान् विकिरेत्तत्र सप्तजप्तान् शवानुना इति।
ततो ह्रीं आधारशक्तिकमलासनाय नमः, इत्यासनं पूजय धृत
आसनमंत्रस्य मेरुपृष्ठ ऋषिः सुतलं छन्दः कूर्मो देवता आसन
परिग्रहणे विनियोगः।
ॐ पृथिव त्वया धृता लोका देवि त्वं विष्णुना धृता।
त्वञ्च धारय मां नित्यं पवित्रं कुरुचासनम्।
इति पठित्वा स्वास्तिकासनादि क्रमेणोपविशेत्,।
उपविश्य विघ्नानुत्सारयेत्। ॥६॥

## तंत्रान्तरे —

आदौ विघ्नान् समुत्सार्य पश्चादासनकल्पनम्।
अथवा चासने स्थित्वा विघ्नानुत्सारयेत्सुधीः ॥७॥
ततः पञ्चगव्येन मूलेन मंडलं शोधयेत्।

## तत्रप्रमाणन्तु गौतमीये —

पञ्चगव्येन तद्गेहं मंडपञ्च विशोधयेत् ॥८॥

## पञ्चगव्यप्रमाणन्तु तत्रैव —

पलमात्रं दुग्ध मार्गं गोमूत्रं तावदिष्यते।
घृतञ्च पलमात्रं स्यात् गोमयं तोलकद्वयम्।

दधि प्रसृतिमात्रं स्यात् पञ्चगव्यमिदं स्मृतम् ॥ ९ ॥
अथवा पञ्चगव्यानां सर्वपापनिकृन्तनम् ॥ १० ॥
ततः स्वदक्षिणे पूजाद्रव्याणि वामभागे सुवासितांबुं अंजलि-
भूत्वा वामे ॐ गुरुभ्यो नमः, ॐ परमगुरुभ्यो नमः,
परापरगुरुभ्यो नमः, दक्षिणगणेशाय नमः, मध्ये अमुक-
देवतायै नमः । 

तथा च —

कृताञ्जलिपुटो भूत्वा वामे गुरुत्रयं यजेत् ।
गुरुञ्च परमादिञ्च परापरगुरुं तथा ।
दक्षिणे गणेशान मूर्ध्नि देवं विभावयेत् ॥ ११ ॥
ततः फोडिति मंत्रेण गन्धपुष्पाभ्यां करौ संशोध्य
ऊर्ध्वोर्ध्वतालत्रयं दत्त्वा छोटिकया दशदिग्बन्धनं कुर्यात्
ततो रक्षार्थं जलधारया वह्निप्राकारं विचिन्तयेत् ॥ १२ ॥
ततो भूतशुद्धिः । ततः प्राणायामः । ततः पीठन्यासः ।
ततः ऋष्यादिन्यासः । ततो मंत्रादिन्यासः । ततो
मुद्रादिदर्शनम् । ततो ध्यानम् । ततो मानसपूजा ।
ततोऽर्घ्यस्थापनम् ॥ १३ ॥

तदयथा —

अर्घ्यस्य त्रीणि पात्राणि पादस्यापि त्रयं भवेत् ।
अथैवाचमनीयानि पात्राणि च विभागशः ।
तथा करणदौर्बल्यादेक एव प्रशस्यते ।
षडाचमन पात्राणि इति आगमान्तरे पाठः ॥ १५ ॥

पुरश्चरणचन्द्रिकायाम् —

एकस्मिन्नथवा पात्रे पाद्यादीनि प्रकल्पयेत् ।
इत्यादिस्मारातोवषयम् ।
किन्तु सामान्यार्घ्यविशेषार्घ्यद्वयस्यावश्यकत्वम् ॥ 15 ॥

~~तथा राघवभट्टधृतवचनम् —~~

तथा च ~~सर्वार्घ्ये~~ नवरत्नेश्वरे —

एक पात्रं न कर्त्तव्यं यदि साक्षान्महेश्वरः ।
मंत्राः पराङ्मुखा यान्ति आपदस्तु पदे पदे ।
इहलोके दारिद्रः स्यान्मृते च पशुतां व्रजेत् ॥ 16 ॥

तथा राघवभट्टधृतवचनम् —

सर्वत्रैव प्रशस्तोऽब्जः शिव-सूर्यार्च्चनं बिना ।
अब्जः शङ्खः ॥ 17 ॥

अर्घ्यपात्रस्य मानमाह त्रैलोक्ये —

षट्त्रिंशदङ्गुलं पात्रमुत्तमं परिकीर्तितम् ।
मध्यमन्तु त्रिभागोनं कनीयो द्वादशाङ्गुलम् ॥१४॥

स्वा स्ववामे त्रिकोणमंडलं कृत्वा तदुपरि त्रिपादिकामारोप्य, फडिति शंखं प्रक्षाल्य, तदुपरि संस्थाप्य, नमइति मंत्रेण गन्धपुष्पाक्षतदूर्वादि तत्र निक्षिप्य विमलजलेन विलोममातृकया मूलेन च पूजयेत् ।

यथा —

क्षं ळं सं षं शं वं लं रं ~~कं~~ यं मं भं बं फं पं नं धं दं थं तं णं ढं डं ठं टं ञं झं जं छं चं ङं घं गं खं कं अः अं औं ओं ॡं ऌं ॠं ऋं ऊं उं ईं इं आं अं इत्यनेन ।

मं वह्निमंडलाय दशकलात्मने नमः इति ~~अर्घे सं~~ त्रिपादिकायां, अं सूर्यमण्डलाय द्वादशकलात्मने नमः इति शंखे उं सोममंडलाय षोडशकलात्मने नमः इति जले संपूज्य, ~~ॐ गंगे~~

गंगे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥

इत्येनेनांकुशमुद्रया सूर्यमंडलात्तीर्थमावाह्य
अमुक इहावह इह तिष्ठ स्वदक्षे देवतां
तत्रावाह्य, ॐ ह्रीं तर्जनीभ्यामवगुण्ठ्य,
वषडिति गालिनीमुद्रां प्रदर्श्य, वौषडितितज्जलं
वीक्ष्य, पुनरङ्गमन्त्रैः सकलीकृत्य, गंधपुष्पाभ्यां
तत्र देवतां संपूज्य, तदुपरि मत्स्यमुद्रया
आच्छाद्य मूलमन्त्रमष्टधा जपेत् ॥१९॥

तथा च गौतमीये तन्त्रे —

गन्धपुष्पैः ~~समभ्यर्च्य~~ कृष्णाख्यं धाम योजयेत् ।
अष्टकृत्वो जपेन्मन्त्रं शिखया गालिनीं न्यसेत् ।
अत्र कृष्णपदं तत्तद्देवतापरम् ॥२०॥

ततो रक्षेति मंत्रेण धेनुमुद्रां प्रदर्श्यास्त्रेण संरक्ष्य
तस्मात् किञ्चिज्जलं प्रोक्षणीपात्रे निःक्षिप्य
तेनोदकेनात्मानं पूजोपकरणञ्च मूलेन निरभ्युक्ष्य
पीठन्यासक्रमेण शरीरे धर्मादीन् पूजयेत् ॥२१॥

तद्यथा —

दक्षिणस्कन्धे ॐ धर्माय नमः, वामे ॐ ज्ञानाय

नमः, वामोरौ वैराग्याय नमः, दक्षिणोरौ ऐश्वर्याय
नमः, मुखे अधर्माय, वामपार्श्वे अज्ञानाय नमः,
नाभौ अवैराग्याय नमः, दक्षिणपार्श्वे अनैश्वर्याय,
सर्वत्र प्रणवादिनमोऽन्तेन पूजयेत् ॥२२॥

तथा च सारदायाम् तन्त्रे —

अंशोरुयुग्मयोर्विद्वान् प्रादक्षिण्येन देशिकः ।
धर्मं ज्ञानञ्च वैराग्यमैश्वर्यञ्चाप्यनुक्रमात् ।
मुखपार्श्वे नाभिपार्श्वेष्वधर्मादीन् प्रकल्पयेत् ॥२३॥

हृदये ॐ अनन्ताय, ॐ पद्माय, अं अर्कमंडलाय
द्वादशकलात्मने ऊं सोममंडलाय षोडशकलात्मने,
मं वह्निमंडलाय दशकलात्मने, सं सत्त्वाय,
रं रजसे, तं तमसे, आं आत्मने, अं अन्तरात्मने,
पं परात्मने, ह्रीं ज्ञानात्मने, प्रणवादि नमोऽन्तेन
पूजयेत् ॥२४॥ सारदायाम् —

न्यासक्रमेण देहेषु धर्मादीन् पूजयेदथ ।
पुष्पाद्यैः पीठमन्त्रान्तं तावित्त्वा परदेवताम् ॥२५॥

ततो हृत्पद्मस्य पूर्वादिकेशरेषु

पीठशक्तिं संपूज्य मध्ये पीठमनुं यजेत् ।
तत्र हृदये मूलदेवतां नैवेद्यं विना गन्धाद्यैः पूजयेत् ॥२६॥
तत्रापि च निबन्धे —
विना नैवेद्य गन्धाद्यैरुपचारैः समर्च्चयेत् ।
तत उत्तमाङ्गं हृदयमूलाधारपाद - सर्व्वाङ्गेषु
मूलेन पञ्चपुष्पांजलिं दत्त्वा यथाशक्ति मंत्रं
जप्त्वा ॐ गुह्याति गुह्यगोप्त्री त्वमित्यादिना जपं
समापयेत् ॥२७॥ तत्रापि च निबन्धे —
पञ्चकृत्वस्ततः कुर्य्यात् पुष्पाञ्जलिमनन्यधीः ।
उत्तमाङ्ग हृदि दाधार पाद सर्व्वाङ्गकं न्यसेत् ।
सर्व्वमेतत् प्रोक्षणीपात्रस्थवारिणा विदध्यात् ॥२८॥
ततः प्रोक्षण्यास्तोयं विसृज्य पूर्व्ववदार्घ्यं गृहीत्वा पूजामा
तत्र वक्ष्यमाणसारदोक्त सर्व्वतोभद्रमंडलाद्यतमं विधायतत्र
ॐ मंडलाय नमः, इति मंडलं संपूज्य शालिभिः
कर्णिकामापूर्य्य, तदुपरि तंडुलान् विकीर्य्य, तेषु
दर्भानास्तीर्य्य, त्रिपुरं चाक्षतान् संयुक्तं तदुपरि न्यसेत्
ततो मङ्गले रुक्तः प्रजपेत् ।

तदपथ्या —

ॐ आधार शक्तये नमः, ॐ कूर्म्माय नमः इत्यादिपीठमन्त्रैः तत्तत्पटलोक्त-पीठपूजां कुर्य्यात् ।
ततो मंडले प्रादक्षिण्येन स्त्वाः पूजयेत् ।—
ॐ धूम्रार्च्चिषे नमः इत्यादिवक्ष्यमाणावह्नेर्दशकला विन्यस्य
ततो हेमादिरचितं कुम्भं फडिति प्रक्षाल्य, चन्दनागुरु-कर्पूरैर्धूपयित्वा त्रिगुणतन्तुना संवेष्ट्य,
ॐ कुम्भाय नमः इति गन्धपुष्पाभ्यां संपूज्य, विष्णुराक्षत नवरत्नानि च प्रक्षिप्य, प्रणवमुच्चरण् कुम्भपीठयोपरैक्यं विभाव्य, पीठे स्थापयेत् ॥ २९ ॥

गौतमीये कुम्भविधानन्तु —

हैमं रौप्यं तथा ताम्रं मार्त्तिकम्वा स्वशक्तितः ।
वित्तशाठ्यं न कुर्व्वीत कृते निष्फलमाप्नुयात् ॥ ३० ॥
षट्त्रिंशदङ्गुलं कुम्भं विस्तारोन्नतिशालिनम् ।
षोड़षं द्वादशम्वापि ततोन्यूनं न कारयेत् ॥ ३१ ॥
ततः कुम्भे प्रादक्षिण्येन सूर्य्यस्य कं भं तपिन्यै नमः
द्वादशकला विन्यस्य पूजयेत् ।
ततः क्षीरद्रुमकषायेण पलाशत्वक् भवेन वा

तीर्थोदकैर्वा गन्धपुष्पसुवासितजलैर्वा आत्माभेदेन मातृकां मन्त्रञ्च प्रतिलोमतो जपन् पूजयेत क्रमं

देवताधिपा | ततश्चन्द्रस्यामृतादि षोडशकला जले प्रादक्षिण्येन विन्यस्य, ॐ अमृतायै नमः, इत्यादिना संपूज्य, श्रीरवान्तरे क्षीरद्रुमकषायादिद्रव्यैरापूर्य गन्धाष्टकं विलोड्य तस्मिन् जले सकला: आवाह्य पूजयेत् ||

सारदायाम् (सारदातन्त्रे)

गन्धाष्टकं त्रिविधं शक्तिविष्णुशिवात्मकम् |
चन्दनागुरुकर्पूरचोरकुम्कुमरोचना: |
जटामांसी कपियुता शक्तेर्गन्धाष्टकम् विदु: || 33 ||
चन्दनागुरुह्रीवेरकुष्ठकुम्कुमसेव्यका: |
जटामांसी मुरमिति विष्णोर्गन्धाष्टकं स्मृतम् || 34 ||
चन्दनागुरुकर्पूरतमालजलकुम्कुमम् |
कुशीतं कुष्ठसंपुक्तं शैवं गन्धाष्टकं स्मृतम् || 35 ||

अस्यार्थ: —

चन्दनागुरु कर्पूर कृष्णाशटी कुम्कुम रोचना
जटामंसी गाविपाला शक्तेर्गन्धाष्टकम् |

चन्दनागुरु वालाकुङ्कुम श्वेतवीरणमूल जटा-
मांसी देवदारु राति विष्णोः ।
चन्दना गुरु कर्पूर तमाल वाला कुम्कुम
रक्तचन्दनकुड्मिति शिवस्य ॥36॥
तत्राग्नौ ~~वह्ने~~ वह्नेर्दशकला: प्रजपेत् ।
32॥ वह्नेधूम्रार्चिरादिदशकला इहागच्छतागच्छत इह
तिष्ठत तिष्ठत: इह सन्निहिता भवत इत्यावाहयेत् ।
ततो मूलमंत्रं प्रीतलोमेन जपन् मंत्रस्य देवतां मनसा
ध्यायन् आस्यां प्राणप्रतिष्ठां कुर्य्यात् ।

तद्यथा —

ॐ ह्रीं क्रों हं सं धूम्रार्चिरादिवह्निदशकलानां प्राणाः
इहप्राणाः एवं आमित्यादि धूम्रार्चिरादिवह्निदशकलानां
जीव इह स्थितः एवं आमित्यादि धूम्रार्चिरादि-
वह्निदशकलानां सर्वेन्द्रियाणि एवं आमित्यादि
धूम्रार्चिरादिवह्निदशकलानां वाङ्मनश्चक्षुः
श्रोत्र - घ्राण - प्राणा इहागत्य सुखं चिरं
तिष्ठन्तु स्वाहा इति प्राणान् प्रतिष्ठाप्य गंधादिभिः
इज्येत् ।

धूमार्च्चिरादिभ्य एष गन्धो नमः । इत्यादिना
पञ्चोपचारैः पूजयेत् । ततः प्रत्येकेन पूजयेत् ।

तद्यथा—

यं धूमार्च्चिषे नमः । रं उष्मायै नमः ।
लं ज्वलन्यै नमः । वं ज्वालिन्यै नमः । शं विस्फु-
लिङ्गिन्यै नमः । षं सुश्रियै नमः । सं सुरूपायै नमः ।
हं कपिलायै नमः । लं हव्यवाहनायै नमः ।
क्षं कव्यवाहनायै नमः । प्रत्येकमावाह्य पूजयेत् ।
ततः सूर्य्यस्य तापिन्यादि द्वादशकला, पूर्ववत्
प्राणप्रतिष्ठावाहनादिकं कृत्वा पूजयित्वा च
प्रत्येकन्तु पूजयेत् ।

द्वादश कला यथा—

तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः ।
सुषुम्ना भोगदा विश्वा बोधिनी धारिणी क्षमा ।
एताः कलास्तु सूर्य्यस्य सूर्य्यमंडलसंस्थिताः ।

तद्यथा—

कं भं तापिन्यै नमः । खं बं तापिन्यै नमः ।

गं फं धूम्राय नमः। घं पं मरीच्यै नमः।
ङं नं ज्वालिन्यै नमः। चं धं ज्वा रुच्यै नमः।
छं दं सुषुम्नाय नमः। जं थं भोगदायै नमः।
झं तं विश्वायै नमः। ञं णं बोधिन्यै नमः।
टं ढं धारिण्यै नमः। ठं डं क्षमायै नमः।
इति पूजयेत्। शक्तश्चेत् प्रत्येकमावाह्य प्रत्येकं गंधादिभिः पूजयेत्। तथा च निबन्धे —
कभाद्या वसुदाः सौराः कला द्वादशेरिताः॥37॥
ततश्चन्द्रस्यामृतादिषोडशकलाः प्राणप्रतिष्ठादिकं कृत्वा पूर्ववत् पूजयेत्।
तद्यथा —
अं अमृतायै नमः। आं मानदायै नमः। इं पूषायै नमः।
ईं तुष्ट्यै नमः। उं रत्यै नमः। ऊं धृत्यै नमः।
ऋं शशिन्यै नमः। ॠं चन्द्रिकायै नमः। लृं कान्त्यै नमः।
लॄं ज्योत्स्नायै नमः। एं श्रियै नमः। ऐं प्रीत्यै नमः।
ओं अंगदायै नमः। औं पूर्णायै नमः। अः पूर्णामृतायै नमः। शक्तश्चेत् प्रत्येकमावाह्य गन्धादिभिः पूजयेत्।

ततः सृष्ट्यादि पञ्चाशत कला प्रजपेत् ।

यथा —

सृष्ट्यादिकवर्गचवर्गदशकलाः पूर्ववत् प्राण-प्रतिष्ठादिकं कृत्वा प्रत्येकं प्रजपेत् ।

प्रत्येकपूजनन्तु —

कं सृष्ट्यै नमः । खं ऋद्ध्यै नमः । गं स्मृत्यै नमः, घं मेधायै नमः, ङं कान्त्यै नमः, चं लक्ष्म्यै नमः, छं धृत्यै नमः, जं स्थिरायै, झं सिद्ध्यै नमः, शक्तश्चेत् प्रत्येकमावाह्य पद्यादिभिः प्रजपेत ।

तत्र ॐ हंसः शुचिसद् सुरन्तरीक्षसद्धोता वेदिसद् तिथिर्दुरोणसन्नृषद्वरसदृतसद्व्योम सदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहदीति जप्त्वा आवाह्य शंखे प्रजपेत् ।

ततो जयादि - टवर्ग दशकलाः पूर्ववत् प्राणप्रतिष्ठादिकं कृत्वा प्रजपेत् ।

यथा — टं जयायै नमः, नमः, ठं पालिन्यै नमः,

ऐश्वर्य्यै नमः,

डं शान्त्यै नमः, ढं ~~ऐश्वर्य्यै नमः~~ णं रत्यै नमः,
तं कालिकायै नमः, दं ह्लादिन्यै नमः
धं प्रीत्यै नमः, नं दीर्घायै नमः, सर्व्वत्र
शाक्तश्चेत् प्रत्येकमावाह्य पूजयेत् ।
~~ततः ॐ प्रतद्विष्णुस्प्रीत्यै नमः, नं दीर्घायै नमः~~,
ततः ॐ प्रतद्विष्णुस्तवते वीर्य्येण मृगो न भीमः
कुचरो गिरिष्ठाः यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति
भुवनानि विश्वा इति जप्त्वा आवाह्य पूजयेत् ।
~~ततः~~ ततस्तीक्ष्णादि पफर्ग दशकलाः पूर्व्ववत्
प्राणप्रतिष्ठादिकं कृत्वा पूजयेत् ।
पं तीक्ष्णायै नमः, फं रौद्रायै नमः, बं भयायै नमः,
भं तन्द्र्यै नमः, यं क्षुधायै नमः, रं क्रोधिन्यै,
बं क्रियायै नमः, ~~बं भयायै नमः~~ वं उत्कारिण्यै नमः,
वं मृत्यु मृत्यवे नमः, शाक्तश्चेत् प्रत्येकमावाह्य
पाद्यादिभिः पूजयेत । ततः ॐ त्र्यम्बकं यजामहे
सुगन्धिं पुष्टिवर्द्धनम् ।
~~उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात्~~

इति जप्त्वावाह्य पाद्यादिभिः पूजयेत् ।

यथा —

षं पीतायै नमः, सं श्वेतायै नमः, हं अरुणायै नमः, ळं असितायै नमः, क्षं अनन्तायै नमः,
शक्तश्चेत् प्रत्येकमावाह्य पूजयेत् ।

ततः ॐ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् इति विष्णुं संस्मरेत् ।
ततो निवृत्यादि षोडशकलाः पूर्ववत् प्राणप्रतिष्ठादि कृत्वा आवाह्य पूजयेत् ।

तद्यथा —

अं निवृत्यै नमः, आं प्रतिष्ठायै, नमः,
इं विद्यायै, ईं शान्त्यै, उं गन्धिकायै, ऊं दीपिकायै
ऋं रेचिकायै, ॠं मोचिकायै, ऌं परायै ॡं सूक्ष्मायै
एं सूक्ष्मामृतायै, ऐं आप्यायिन्यै ओं व्यापिन्यै, औं
व्योमरूपायै, अः अनन्तायै नमः ।
शक्तश्चेत् प्रत्येकमावाह्य पाद्यादिभिः पूजयेत् ।
ॐ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते

विष्णोर्यत् परमं पदं विष्णुर्योनिं प्रकल्पयतु
त्वष्टा रूपाणि पिंशतु।
आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते।
गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वती।
गर्भन्ते अश्विनौ देवावाधत्तां पुष्करस्रजाविति जप्त्वा च
ततः कलात्मकं तत्सारस्वरूपं ध्यात्वा कुम्भे निक्षिपेत् ॥38॥
ततोऽश्वत्थपनसचूतपल्लवैरिन्द्रवल्लीवेष्टितैः
प्रकल्पवृक्षबुध्या कुम्भवक्त्रं पिधाय, तस्मिन्
कुम्भवक्त्रे सफलाक्षतं चषकं कल्पवृक्षफलबुध्या
स्थापयेत्।
ततः कुम्भं निर्मलेन क्षौमयुग्मकेन संवेष्ट्य,
मूलेन कुम्भे मूर्तिं निरूप्य,
यथोक्तस्वरूपेण देवतां ध्यात्वा तत्रावाहनं कृत्वा
पूजयेत्। मूलमन्त्रमुच्चारन् अमुक इहागच्छ
इहागच्छ इह तिष्ठ इह तिष्ठ सन्निधेहि इह
सन्निरुध्यस्व इत्यावाहनादिकं कृत्वा लं इत्यव-
गुण्ठ्य देवताङ्गे षडङ्गन्यासं कृत्वा, रश्मिभिर्धेनुमुद्रा

Margin: पूजयेत्।

अमृतीकृत्य, परमीकरणमुद्रया परमीकुर्य्यात् ।
ततः प्राणप्रतिष्ठां कृत्वा षोडशोपचारैः प्रजपेत् ॥३९॥
यथा —
मूलमुच्चार्य्य इदमानसं अमुकदेवतायै नमः,
अमुकदेव स्वागतन्ते इति स्वागतम् ।
ततो मूलमुच्चार्य्य एतत् पाद्यं अमुकदेवतायै नमः इति
पद्माम्बुजे । एतत् श्यामाकदूर्वाब्जविष्णुक्रान्ताभिरीरितम् ।
अर्घ्य इति गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपदूर्वासमर्घ्यं
विष्णवेतु अर्घ्यादिक्रमेणैव देयमिति वदन्ति ।
जातीलवङ्गकक्कोलात्मकमाचमनीयं वदने दद्यात् ।
स्वधा मंत्रेण वदने दद्यादाचमनीयकं इत्यत्र
सुधापाठं कुर्वन्तु सुधाशब्दस्यामृतवाचकत्वाद-
मृतशब्दस्य जलवाचकत्वादिदमाचमनीयं
वामिति वदन्ति ॥५०॥
तथाच —
मधुपर्कं ततो दद्याजल मंत्रेण देशिकः इति वचनात्
न च मधुपर्कमात्रविषयमिदम् ।

स्वधा सुधात्मना ततः कुर्यान्मधुपर्कं मुखाम्बुजे।
तेनैव मनुना कुर्याद्द्विराचमनीयकम्।

इति वचनात्। तथा—
वारुणेन च मंत्रेण दद्यादाचमनीयकम्।
एतद् वचनं शूद्रविषयकमिति केचित्।
वस्तु तस्तु इच्छाविकल्पः।
मैथिलास्तु स्वधापदं कुर्वन्ति न सुधीति
वकारस्य त्यागाबोधकत्वात्।
किञ्च त्यागार्थकस्वाहाशब्देनार्घ्यदानविधानात्,
तत्समभिव्याहृताचमनीयदाने त्यागाविबोधकत्वेन
स्वधामंत्रो युज्यते न तु वस्मिति ॥५॥
तथा च
नमः स्वाहास्वधावषट्वौषडिति यथाक्रमाभिधानात्
जलमंत्रे देशिक इति वचनं प्रमाणशून्यमिति
तेनाचमनीयं स्वधेति। ...तांत्रिकाः।
तथा—
स्वधेत्याचमनीयञ्च त्रिवारं मुखपंकजे।

...शिरसि दद्यात्।

स्वधेति धमुपर्कञ्च पुनराचमनीयकमिति सोम—
शम्भुधृतवचनात् एके पुनर्जलमंत्रेण देशिकः
वारुणेन च बीजेन इत्यत्र स्वहार्थे तृतीयां वदन्तः
इदमाचमनीयं वं अमुकदेवतायै स्वधेति मन्यन्ते।
ततो मधुपर्कः स्वधा इति मधुपर्कं दद्यात् ॥५२॥
आज्यं दधिमधुन्मिश्रं मधुपर्कं विदुर्बुधाः।
एवं पुनराचमनीयं स्वधेति
ततः स्नानीयं निवेदयामि ततो वस्त्रं यज्ञोपवीतानि दद्यात्)
ततः आभरणं नमः, एष गन्धो नमः,
स च गन्धश्चन्दनकर्पूरकालागुरुमिश्रितः ॥५३॥
मंत्रपुटितमातृकावर्णैन तत्तन्न्यासस्थानानि पूजयित्वा
एतानि पुष्पाणि वौषट् ॥ ५४॥
ततः आवरणपूजा सर्व्वत्र दाने मूलमंत्रोच्चारणम् ॥५५॥
ततो गुग् गुल्वगुरु शीर शर्करा मधु चन्दन घृतात्मकं धूपं द
तथा च सारदायाम—
गुग् गुल्वगुरु शीर - शर्करा मधुचन्दनैः।
धूपयेदाज्यसंमिश्रैर्नीचैर्देवस्य देशिकः ॥५६॥

विशेषस्तु तत्रैव —

सिताज्य मधुसंमिश्रं गुग्गुल्वगुरुचन्दनम् ।
धूपमेतत्तु सर्वदेवप्रियं सदा ।
रोगरोगहरोरोगदकेशा: सुरगुरु जतुसधुपत्रविशषा: ।
वक्रीबवर्जितवारिदमुस्ता दूरवीरिह सुन्दरि मद्रा ।

अस्यार्थः —

कुष्ठ हरीतकी - गुड़ - जटामांसी - देवदारु जतु
अगुरु - तेजपत्र सरल - नखी मुस्ता: ॥५७॥

तथा —

गुग्गुलुं सरलं दारु पत्रं मलयसम्भवम् ।
ह्रीवेरमगुरुं कुष्ठं गुड़ सर्ज्जरसं घनम् ।
हरीतकीं नखीं लाक्षां जटामांसीञ्च शैलजम् ।
षोड़शाङ्गं विदुर्धूपं दैवे पैत्रे च कर्मणि ।
मधु मुस्तं घृतं गन्धं गुग्गुल्वगुरु शैलजम् ।
सरलं सिल्हसिद्धार्थं दशाङ्गो धूप उच्यते ॥५८॥
ततः कर्पूर गर्भिण्या वर्तिकया दीपं दद्यात् ।

तथा च —

वर्त्या कर्पूरगर्भिण्या सार्पिषा तिलजेन वा ।

आरोप्य दर्शयेद्दीपानुच्चैः सौरभशालिनः ।

इति सारदाधृतम् ॥ ४७ ॥

विशेषस्तु —

तत्र तत्र जलं दद्यादुपचारान्तरान्तरे ।

मधुपर्के च वस्त्रे च दद्यादाचमनीयकम् ।

ततो नैवेद्यानि दद्यात् ॥ ५० ॥

गन्धादि दाने विशेषस्तु तंत्रान्तरे —

मध्यमानामिकाङ्गुष्ठै अङ्गुल्यग्रेण पार्वति ।

दद्याच्च विमलं गन्धं मूलमंत्रेण साधकः ॥ ५१ ॥

अङ्गुष्ठतर्जनीभ्यान्तु चक्रे पुष्पं निवेदयेत् ।

यथा गंधं तथा देवि धूपं दद्याद्विचक्षणः ॥ ५२ ॥

मध्यमानामिकाभ्यान्तु मध्यपर्वाणि देशिकः ।

अङ्गुष्ठाग्रेण देवेशि धृत्वा धूपं निवेदयेत् ॥ ५३ ॥

उत्तोलनं त्रिधा कृत्वा गायत्र्या मूलयोगतः ।

तत्त्वाख्यमुद्रया देवि नैवेद्यन्तु निवेदयेत् ॥ ५४ ॥

मूलेनाचमनं दद्यात् ताम्बूलं तत्त्वमुद्रया ।

धूपं भाजनमंत्रेण प्रोक्षयेत्तर्जन्या इदामुना ॥ ५५ ॥

अस्त्रेण पूजितां घन्टां वादयन् गुग्गुलुं दहेत् ।
ततः समर्पयेद्धूपं घन्टावाद्यजयस्वनैः ॥ 56 ॥

तथा

जयध्वानि तथा मंत्रमातः स्वाहेत्युदीर्य्यते
अभ्यर्च्च्य वादयेद्घन्टां सुधूपैर्धूपयेत्ततः ॥ 57 ॥

तंत्रे—

न भूमौ वितरेद्धूपं नासने न घटे तथा ॥ 58 ॥

तथा च गौतमीये—

उत्तार्य्य दृष्टिपर्य्यन्तं घन्टां वामदिशि स्थिताम् ।
वादयन् वामहस्तेन दक्षहस्तेन चार्पयेत् ॥ 59 ॥
एवं दीपदानेऽपि घन्टावादनम् ।

जामले—

निवेदयेत् पुरोभागे गन्धं पुष्पञ्च भूषणम् ।
दीपं दक्षिणतो दद्यात् पुरतो वा न पृष्ठतः ॥ 60 ॥
वामतस्तु तथा धूपमग्रे वा न दक्षिणे ।
नैवेद्यं दक्षिणे वामे पुरतो वा न पृष्ठतः ॥ 61 ॥
वामदक्षिणभागश्च देवताया एव न तु साधकस्य ।

धूपदीपौ सुभोज्यञ्च देवताग्रे निवेदयेत् इति दर्शनात्॥
घृतपुक्तं दक्षिणे तैलपुक्तं वामे ।
एवं सितावर्तिश्च दक्षिणे रक्ता च वामे सम्मुखे तु नि
पक्वञ्च देवतावामे आमान्नञ्चैव दक्षिणे ॥६५॥
तथा च पुरश्चरणचन्द्रिकायाम् —
दक्षिणन्तु परित्यज्य वामे चैव निधापयेत् ।
अभोज्यं तद्भवेदन्नं पानीयञ्च सुरेपरम् ।
इति साम्प्रदायिकाः ॥६५॥
तथा च यामले —
दीपं घृतपुक्तं दक्षे तैलपुक्तञ्च वामतः ।
दक्षिणे च सितावर्तिं वामतो रक्तवर्तिकम् ।
पक्वापक्वविधानेन नैवेद्येष्विति तत स्थितः ।
पुरतो नियमो नास्ति दीपनैवेद्ययोः क्वचित् ॥६६॥
ततो वन्दनं ततोऽष्टोत्तरसहस्रं शतं वा
संजप्य गुह्यातीत्यादीना जपं समर्पयेत् ।६७॥
अस्य मंत्रस्य दशसंस्कारान् कृत्वा पूर्वोक्तेन
प्रकारेण गुरुः शिष्यस्य ... मंत्रेण

त॥६२॥ शिष्यनेत्रं वस्त्रेणाच्छाद्य शिष्याञ्जलिं पुष्पैः पूरयित्वा गुरुः स्वयमेव मंत्रमुच्चरन् कलशे देवताप्रीत्यै क्षेपयेत्।

नियमः॥६३॥ ततो नेत्रबन्धनं दूरीकृत्य दर्भास्तरे आसीनं सुकूल- पूजा कृत्वा, कुतस्तु भूतादि विधाय तत्त मंत्रोक्त न्यासान् शिष्यदेहे कुर्यात्।

कुम्भस्थां देवतां पुनः षड्चोपचारैः सम्पूज्य अलंकृतं शिष्यमन्यस्मिन्नुपवेशयेत्।

ततो मंगलाचारपूर्वकं कुम्भं समुद्धृत्य, तन्मुख- स्थान् सुरद्रुमरूपान् पल्लवान् शिष्यस्य शिरसि निधाय मातृकां मनसा जपन् मूलेन साधि- तैस्तोयैर्व्यासिष्ठ संहिताभिर्वरुणमंत्रैस्तमभिषिञ्चेत्॥६४

शिष्यः अवशिष्टजलेनाचम्य, वाससी परिधाय, गुरोः सन्निधावुपविशेत्।

ततस्तामेव देवतां शिष्यसंक्रान्तां तयोरैक्यं सम्भावयन्, गन्धादिभिः पूजयेत्।

ततः ॐ सहस्रार हुँ फडिति शिष्यशिखां बद्ध्वा संरक्ष्य [illegible] कुर्यात्।

तद्यथा –

कुमव्ययेण पादतलाज्जानुपर्य्यन्तं ॐ निवृत्त्यै नमः।
जानुनोर्नाभिपर्य्यन्तं ॐ प्रतिष्ठायै नमः।
नाभेराकण्ठं ॐ शान्त्यतीतायै नमः विद्यायै नमः।
कण्ठाद्‌ललाटं ॐ शान्त्यै नमः। ललाटाद् ब्रह्मरन्ध्रान्तं
ॐ शान्त्यतीतायै नमः।
पुनर्ब्रह्मरन्ध्राल्ललाटं ॐ शान्त्यतीतायै नमः।
ललाटादाकण्ठं ॐ शान्त्यै नमः। कण्ठान्नाभिपर्य्यन्तं ॐ
विद्यायै नमः। नाभेर्जानुपर्य्यन्तं ॐ प्रतिष्ठायै नमः।
जानुनोः पादपर्य्यन्तं ॐ निवृत्त्यै नमः ॥६९॥
ततः शिष्यस्य शिरसि हस्तं दत्त्वा, देयमंत्रमष्टोत्तरशतं
जप्त्वा अमुकमंत्रं तेऽहं ददामीति शिष्यहस्ते जलं
दद्यात्। ततो ददस्वेति शिष्यो ब्रूयात्।
तथा च वासिष्ठे – (वासिष्ठसंहितायाम्)
ततस्तत् शिरसि स्वहस्तं दत्त्वा शतं जपेत्।
अष्टोत्तरं ततो मंत्रं दद्यादमुकपूर्वकम्।
अनयोस्तुल्यफलदो भवत्वेवमुदीरयेत् ॥७०॥
ततः ऋष्यादिसंपृक्तं मंत्रं गुरुर्दक्षिणकर्णे त्रिः

~~श्राव~~ श्रावयित्वा वामकर्णे सकृत श्रावयेत् ।

तथा च गौतमीये तंत्रे —

न्यासजातं तस्य देहे गुरुः संन्यस्य यत्नतः ।
दक्षिणकर्णे वदेन्मंत्रं त्रिवारं पूर्णमानसः ।
दक्षे इति द्विजातिविषयम् ॥ 71 ॥

तथा च तंत्रे —

दक्षिणकर्णे त्रिशो विद्यां एकोच्चारणे चोच्चरेत् ।
एवं विप्रादि द्विजातीनां स्त्रीशूद्राणां च वामतः ॥72॥

रुद्रयामले —

गुरुस्तु प्राङ्मुखो भूत्वा शिष्यः प्राचीमुखास्थितः ।
त्रिवारं. दक्षिणे कर्णे वामे चैव तथा सकृत ।
विपरीतं तथा ज्ञेयं स्त्रीशूद्राणाञ्च वामतः ॥73॥

ततो गुरुचरणे पतित एव तिष्ठेत् ।
त्वत्प्रसादादहं देव कृतकृत्योऽस्मि सर्वतः ।
माया मृत्युमहापाशाद्विमुक्तोऽहास्मि शिवोऽहास्मि च ।
इति वदेत् ॥ 74 ॥

ततो गुरुः

उत्तिष्ठ वत्स मुक्तोऽसि सम्यगाचारवान् भव ।
~~कीर्ति~~ कीर्तिश्रीकान्तिपुत्रायुर्बलारोग्यं सदास्तु ते ।
इति उत्थापयेत् ॥75॥

बिश्वसार तंत्रे —
दक्षिणकर्णे वदेन्मंत्रं ऋष्यादिक समन्वितम् ।
तथा तस्मिन् क्षणे देवि जपेन्मंत्रं शताष्टकम् ॥76॥

सारदा तंत्रे —
गुरोर्लब्ध्वा परां विद्यामष्टकृत्वो जपेत् सुधीः ।
गुरुमंत्रदेवतानामैक्यं सम्भावयन् धिया ।
स्वदच्चनं तत्तद् भावनापरजपविषयम् भावनाशून्येतु सहस्रं
गुरुः स्वशक्तिरक्षार्थं सहस्रं वा शतं जपेत् ।

तंत्रान्तरे —
शतं जपेत्तदग्रे तु निकटे शिष्यसन्निधौ वसेत् ।
नोचेत् सञ्चारिणी शक्ति गुरुर्भवति न संशयः ॥78॥

विश्वसार तंत्रे —
अष्टाधिकसहस्रं वा शतं वापि विधानतः ।
स्वशक्तिरक्षणार्थाय गुरुर्मंत्रं शतं जपेत ॥79॥

यामले —

दत्वा मंत्रं जपेद्देवि शतमष्टोत्तरं ततः ॥४०॥
~~शरीरमर्थं~~ ततः शिष्यः कुशतिलजलान्यादाय ॐ अद्य कृतैतत् अमुकदेवताया अमुकमंत्रग्रहणप्रतिष्ठार्थं दक्षिणामिदं सुवर्णं काञ्चनं वा वह्निदैवतं अमुकगोत्राय अमुकदेवशर्म्मणे गुरवे तुभ्यमहं संप्रददे ॥४१॥
शरीरमर्थं प्राणांश्च सर्व्वं तस्मै निवेदयेत् ।
ततः प्रभृति कुर्व्वीत गुरोः प्रियमनन्यधीः ।
यद्यदिष्टतमं लोके गुरवे तन्निवेदयेत् ॥४२॥

स्वतंत्रतंत्रे दक्षिणानियमो यथा —

प्रम् ॥७७॥ गुरवे दक्षिणां दद्यात् प्रणम्याय शिवात्मने ।
सर्व्वस्वं वा तदर्द्धं ~~वा~~ तदर्द्धं वा तदर्द्धकम् ।
नोचेत् सञ्चारिणी शक्तिः कथमस्य भविष्यति ॥४३॥

कुलामृते —

वित्तशाठ्यं परित्यज्य सर्व्वकर्म्माणि साधयेत् ।
वित्तशाठ्यं निहन्त्याशु पुण्यान्यायुर्यशो धनम् ।४४॥
गुरुदेवं वञ्चयित्वा यः कुर्य्याद्धनसञ्चयम् ।
तेन तद्भुज्यते नैव ह्रीयते राजतस्करैः ॥४५॥

आसनं गुरवे दद्याद्रक्तकम्बलमेव च ।
हाराद्याभरणं दद्याद्गान्धं दद्यात् पयस्विनीः ॥86॥
भूमिं वृत्तिकरीं दद्यात् पुत्रपौत्रानुगामिनीम् ॥87॥

तथा—

गुरवे दक्षिणां दद्यात् स्वर्णं वस्त्रसमन्वितम् ।
गुरुसन्तोषमात्रेण दुष्टमन्त्रोऽपि सिध्यति ॥88॥
अन्यथा नैव सिद्धिः स्यादभिचाराय कल्पते ।
दीक्षाग्रहणसामग्रीं गुरवेऽप्य निवेदयेत् ।
अन्यांश्च ब्राह्मणांस्तत्र यत्नतः परितोषयेत् ।
ततो मिष्टान्नपानादिना ब्राह्मणान् परितोष्य स्वयं भुञ्जीत ॥ 89

तथा च निबन्धे—

ब्राह्मणान् भोजयेत् पश्चाद्विधिवद्दीक्षितो नरः ।
विप्रेभ्यो दक्षिणां दद्यात् स्वयं भुञ्जीत वाग्यतः ॥90॥

दीक्षादिवसे गुरुशिष्ययोरुपवासनिषेधमाह योगिनीतन्त्रे—

मन्त्रं दत्त्वा गुरुश्चैवमुपवासं यदाचरेत् ।
महान्धकारे नरके क्रिमिर्भवति नान्यथा ॥ 91 ॥
दीक्षां कृत्वा [illegible] यदि मन्त्री उपवासं समाचरेत् ।

तस्य देवः सदा रुष्टं शापं दत्वा व्रजेत् पुरम् ॥९२॥
यद्यत्र होमः क्रियते तदा तद्विधानं वक्ष्यामः ।
इति कल्यावती दीक्षाप्रयोगः ॥ ९३॥

अथ पञ्चायतनी दीक्षा

जामले—

भवानीन्तु यदा मध्ये ऐशान्यामच्युतं यजेत् ।
आग्नेय्यां पार्वतीनाथं नैरृत्यां गणनायकम् ।
वायव्यां तपनञ्चैव पूजाक्रम उदाहृतः ॥ ९४॥
यदा तु मध्ये गोविन्दमैशान्यां शंकरं यजेत् ।
आग्नेय्यां गणनाथञ्च नैरृत्यां तपनन्तथा ॥ ९५॥
वायव्यामम्बिकाञ्चैव भोगमोक्षैकभूमिकाम् ।
शंकरञ्च यदा मध्ये ऐशान्यामुच्यतं यजेत् ॥ ९६॥
आग्नेय्यां तपञ्चैव नैरृत्यां गणनायकम् ।
वायव्यां पार्वतीञ्चैव स्वर्गमोक्षप्रदायिनीम् ॥९७॥
आदित्यञ्च यदा मध्ये ऐशान्यां शंकरं यजेत् ।
आग्नेय्यां गणनाथञ्च नैरृत्यां केशवं यजेत् ॥९८॥
वायव्यामम्बिकां देवीं स्वर्गसाधनभूमिकाम् ।

गणनाथं यदा मध्ये ऐशान्यां केशवं यजेत् ॥११॥
आग्नेय्यामीश्वरश्चैव नैर्ऋत्यां तपनस्तथा।
वायव्यां ~~पार्वति~~ पार्वतीश्चैव पूजयेन्मोक्षसाधिनीम्।
स्वस्थानवर्जिता देवा दुःख शोकभयप्रदाः ॥१००॥

तथाच गणेशविमर्षिणाम —

शम्भौ मध्यगते हरीनहरभूदेव्यो हरौ शंकरे-
भास्येनागसुता हरगणेशाम्बिकाः स्थापिताः।
देव्यां विष्णुहरैकदन्तरवयो
लम्बोदरेहजेश्वरे
नार्य्यः शंकर~~भाग~~तोऽतिसुखदा
व्यस्तास्तु ते हानिदाः॥१॥

रामार्च्चन्द्रिकायां गौतमीये च—

सदा तु मध्ये गोविन्दमाग्नेय्यां गणनायकम्।
नैर्ऋत्यां हंसमर्च्चेय वायव्यां गच्छेपोद्दिवाम्॥२॥
~~नैर्ऋत्यां~~ ऐशान्यां शंकरश्चैव भोगमोक्षफलाप्तये
इति यद्यपि देवतायाः पूजने आग्नेय्यादौ गणेशादि-
पूजनमुक्तं तदपि गोपालविषयमिति केचित्।

वस्तुतो वैकाल्पिकमिति साम्प्रदायिकाः ॥३॥

एतेषां पूजनस्तु गौतमीये तंत्रे —

गन्धादिभिर्यथाभ्यर्च्य षड़ङ्गार्च्चमाचरेत् ।
विंशकृत्वो जपेन्मंत्रं नमस्कृत्य समापयेत् ॥४॥

अङ्ग देवतापूजाकालस्तु पीठ देवतापूजानन्तरम् ।

तथा च सनत्कुमारतंत्रे —

पीठस्यार्च्चनमङ्ग देवयजनं प्राणप्रतिष्ठा ततः ।
आह्वानं निजमुद्रिकाविरचनं ध्यानं प्रभोः पूजनम् ॥5॥

यत्तु —

देवे पुष्पाञ्जलिं दत्वा अङ्गदेवान् समर्च्चयेत् ।

तत्तु प्रतिष्ठित यन्त्रादिक विषयम् ॥6॥

यन्त्रातिरिक्ताधारे पूजने तु कुलार्णवत्याम् —

एवं पीठे पृथक् पूजां विना यंत्र करोति यः ।
अङ्गाङ्गित्वं पीठ्यज्य देवताशापमाप्नुयात् ॥7॥

सर्वेषामङ्गमंत्राणां सिद्धादिविचारो नास्ति ।

तथा च —

सिद्धादि शोधनं नैषामङ्गत्वे सति रत्नवत् ॥8॥

श्यामादौ तु पञ्चापतनाभारः ।

तथा च ऊर्ध्वाम्नाये —

श्यामायां भैरवी तारायाञ्छिन्नमस्तासु भैरवी ।
मञ्जुघोषे तथा रौद्रे पञ्चाङ्गं नेष्यते बुधैः ॥९॥
उपविद्यासु सर्व्वासु षट्कर्म्मादिषु साधने ।
नात्र दीक्षाद्यपेक्षास्ति नाथाङ्गादि प्रपूजनम् ॥१०॥

तत्वसारे —

उपविद्यासु सर्व्वासु तथा प्रयोगसाधने ।
दीक्षा विनैव कर्त्तव्य उपदेशः सदैव हि ॥११॥

अथ संक्षेप दीक्षा ।

मुहूर्त्ते सर्व्वतोभद्र नव कुम्भं निधाय च ।
सोदकं गन्धपुष्पाभ्यामर्च्चितं वस्त्रसंयुतम् ।
सर्व्वौषधिनवरत्नपञ्च पल्लव संपुतम् ।
ततो देवार्च्चनं कृत्वा हुनेदष्टोत्तरं शतम् ।
पञ्चपल्लवमिति पनसाम्राश्वत्थवट वकुलानि ।२॥

तथा च वाशिष्ठे —

पनसाम्रं यथाश्वत्थं वटं बकुलमेव च ।

पञ्चपल्लवमित्युक्तं मुनिभिस्तंत्रवेदिभिः ॥13॥

नवरत्नानि —

मुक्तामाणिक्य स्वलंकृतं वैदूर्यगोमेदौ वज्रविद्रुमौ
पद्मरागं मरकतं नीलश्चेति यथाक्रमात् ॥14॥

निबन्धे —

शिष्यं मंत्रणाष्टशतैर्मंत्रितैरभिषेचयेत
शिष्यं स्वलंकृतं वेद्यामुपाग्निमुपवेशयेत् ।
यांत्रितैः प्रोक्षणीतोयैः शान्तिकुम्भजलैस्तथा ॥15॥
मूलमंत्रेणाष्टशतैर्मंत्रितैरभिषेचयेत ।
अष्टशतैः अष्टोत्तरशतैः ॥16॥
मूलजाप संपादयेन्मन्त्रं हस्तं शिरसि धारयन् ।
नमो हस्तित्वत्प्रशतान् दद्यात्ततः शिष्योऽर्चयेद्गुरुम् ॥17॥
यद्वा दीक्षान्तरं शंखमभ्यर्च्य स्थापितं तदम्बुनाभि
षिच्याष्टवारं मूलेन शिरसि करं निधायाष्टौ
वारान् कर्णे जपेत् ।

यथा च —

तत्राप्यशक्तः कश्चिच्चेदज्ञमध्यन्तर्च्य स्थाप्य
तम् ।

तदभुनाभिषिच्याष्टवारं मूलेन केवलम् ।
निधायाष्टौ जपेत् कर्णे उपदेशे त्वयं विधिः ।
इति संक्षेपदीक्षा ॥ १८ ॥

उपदेशान्तरमाह विश्वसार तंत्रे —

चन्द्रसूर्य्यग्रहे तीर्थे सिद्धक्षेत्रे शिवालये ।
मंत्रमात्र प्रकथनमुपदेशः स उच्यते ॥ १९ ॥

विश्वसार तंत्रे —

महादीक्षा तथा दीक्षा उपदेशस्ततः परम् ।
युगे युगे च कर्त्तव्य उपदेशः कलौ युगे ॥ २० ॥

अथ सर्वतोभद्रम् ।

सारदायाम् —

चतुरस्रे चतुः कोष्ठे कर्णसूत्रसमान्विते ।
~~सुसुम~~ चतुर्ष्वपि च कोष्ठेषु कोणसूत्रचतुष्टयम् ।
मध्ये-मध्ये तथा मत्स्या भवेयुः पातयेत्तथा ।
पूर्वापरायते द्वे द्वे मंत्री याम्योत्तरायते ।
पातयेत्तेषु समं सूत्रचतुष्टयम् (मत्स्येषु)
पूर्ववत्कोणकोष्ठेषु कर्णसूत्राणि पातयेत् ।

तच्चद्भुतेषु मत्स्येषु दद्यात् सूत्रचतुष्टयम् ।
ततः कोष्ठेषु मत्स्याः स्युस्तेषु सूत्राणि पातयेत् ।
यावत् शतद्वयं मत्स्या षट् पञ्चाशत् पदान्यपि ।
तावत्तेनैव विधिना तत्र सूत्राणि पातयेत् ।
षट् त्रिंशता पदैर्मध्ये लिखेत् पद्मं सुलक्षणम् ।
बाह्यः पंक्त्या भवेत् पीठं पंक्तियुग्मेन वीथिका ।

सर्व्वतोभद्रमंडलम् ।

द्वारशोभोपशोभाभ्यां शिष्टाभ्यां परिकल्पयेत् ।
शास्त्रोक्तविधिना मंत्री ततः पद्मं समालिखेत् ।
पद्मक्षेत्रस्य संत्यज्य द्वादशांशं बहिः सुधीः ।
तन्मध्ये विभजेद् वृत्तैस्त्रिभिः समविभागतः ।
आद्यं स्यात् कर्णिकास्थानं केशराणां द्वितीयकम् ।
तृतीयं पद्मपत्राणां सुतांशेन दलाग्रकम् ।
बाह्यवृत्तान्तरालस्य मानेन विधिना सुधीः ।
आलिखेद्बाह्यहस्तेन दलाग्राणि समन्ततः ।
दलमूलेषु युगशः केशराणि प्रकल्पयेत् ।
एतत् साधारणं प्रोक्तं पङ्कजं तन्त्रवेदिभिः ।
पदानि त्रीणि पद्यार्थं पीठकोणेषु मार्जयेत् ।
अवशिष्टैः पदैर्विद्वान् पीठगात्राणि कल्पयेत् ।
पदानि वीथिसंस्थानि मार्जयेत् पंक्तिभेदतः ।
दिक्षु द्वाराणि रचयेदद्धिचतुः कोष्ठकैस्ततः ।
पदैस्त्रिभिरथैकेन शोभाः स्युर्द्वारपार्श्वयोः ।
उपशोभाः स्युरेकेन त्रिभिः कोष्ठैरनन्तरम् ।
अवशिष्टैः पदैः षड्भिः कोणानां स्याच्चतुष्टयम् ।

रञ्जयेत् पञ्चभिर्वर्णैर्मण्डलं तन्मोहरम् ॥२१॥
पीतं हरिद्राचूर्णं स्यात् सितं तंडुलसम्भवम् ।
कुसुम्भचूर्णमरुणं कृष्णं गन्धपुलाकजम् ।
बिल्वादिपत्रजं श्यामाभिस्युक्तं वर्णपंचकम् ॥२२॥
अङ्गुलोत्सेधविस्तारा: सीमारेखा: सिता: शुभा: ।
कर्णिकां पीतवर्णेन केशराण्यरुणेन च ।
शुक्लवर्णानि पत्राणि तत्सन्धीन श्यामलेन च ।
रजसा रञ्जयेन्मंत्री पद्मं पीतैव कर्णिका ।
केशरा: पीत रक्ता: स्युररुणानि दलानि च ।
सन्धय: कृष्णवर्णा: स्यु: सितेनाथासितेन वा ।
रञ्जयेत् पीठगर्भाणि पादा: स्युररुणप्रभा: ।
गात्राणि तस्य शुक्लानि वीथिषु च चतसृषु ।
आलिखेत् कल्पलतिका दल-पुष्प-समन्विता: ।
वर्णैर्नानाविधैश्चैव समदृष्टिमनोहरा: ।
द्वाराणि श्वेतवर्णानि शोभा रक्ता: समीरिता: ।
उपशोभा: पीतवर्णा: कोणान्यसितभानि च ।
तिस्रो रेखा वहि: काच्या: सितरक्तासिता: क्रमात् ।

मंडलं सर्व्वतोभद्रमेतत् साधारणं मतम् ॥२३॥
अथ स्वल्पसर्व्वतोभद्रमंडलम् ।
चतुरस्रं ध्रुवं भित्वा दिग्भ्यो द्वादशधा सुधीः ।
पातयेत्तत्र
स्वल्पसर्व्वतोभद्रम् ।

# नवनाभमंडलम् ।

## अथ नवनाभमंडलम् ।

चतुरस्रे चतुःषष्टिपदान्यारचयेत सुधीः ।
पदैश्चतुर्भिः पद्मं स्यान्मध्ये तत्परितः पुनः
वीथ्यश्चतस्रः कुर्वीत मंडलान्तरसाधिकाः ।
दिग्गतेषु चतुष्केषु पद्मान्यानि समालिखेत् ।
विदिग्गतचतुष्काणि भित्वा षोडशधा सुधीः ।
भाजयेत स्वस्तिकाकारं श्वेतपीतारुणासितैः ।

रजोभिः पूरयानि स्वस्तिकानि शिवादितः ।
प्राक्प्रोक्तेनैव मार्गेण शेषमन्यत्समापयेत् ।
नवनाभमिदं प्रोक्तं मंडलं सर्वसिद्धिदम् ॥२५॥

अथ पञ्चाब्जमंडलम् ।

पञ्चाब्जमंडलं प्रोक्तमेतत् स्वस्तिकवर्जितम् ।
दीक्षायां देवपूजायां मंडलानां चतुष्टयम् ।
सर्वतंत्रानुसारेण प्रोक्तं सर्वसमृद्धिदम् ॥२६॥

अथ त्रिलोही मुद्रा —

अत्र मंत्रिणां हितार्थाय त्रिलोही मुद्रा निरूप्यते ।
सोमसूर्याग्निरूपाः सुवर्णा लोहत्रयं तथा ।
रौप्यमिन्दुः स्मृतो हेम सूर्यस्ताम्रो हुताशनः ॥२७॥
लोहभागाः समुद्दिष्टाः स्वराद्यक्षर संख्यया ।
त्रैलोहैः कारयेन्मुद्रामसंकलितसङ्गताम् ॥२८॥
एषु स्वराः स्मृताः सौम्याः स्पर्शाः सौराः शुभोदयाः ।
आग्नेया व्यापकाः सर्वे सोमसूर्याग्निदेवताः ॥२९॥
स्वराः षोडश विख्याताः स्पर्शास्ते पञ्चविंशतिः ।
व्यापकाः दश ते कामधनधर्मप्रदायिनः ॥३०॥

साष्टं सहस्रं संजप्य स्पृष्ट्वा तां जुहुयात्ततः ।
तस्यां सम्पातयेन्मंत्री सर्पिषा पूर्वसंख्यया ॥३१॥

पञ्चाब्जमंडलम् ।

निक्षिप्य कुम्भे तां मुद्रामभिषेकोक्तवर्त्मना ।
आवाह्य पूजयेद्देवीमुपचारैर्विधानतः ॥३२॥
अभिषिच्य विनीताय दद्यात्तां मुद्रिकां गुरुः ।
इयं मुद्रा क्षुद्ररोगविषज्वरविनाशिनी ॥३३॥
व्यालचौरमृगादिभ्यो रक्षां कुर्याद्विशेषतः ।

186 6365.

युद्धे विजयमाप्नोति धारयेन्मनुजेश्वरः ॥३५॥
मंत्रसिद्धिकरी पुंसां चतुर्वर्गफलप्रदाम् ।
धारयेन्मनुजा नित्यं देवतुल्यो भवेद् भुवि ॥३६॥
अभिषिच्येति पूर्वदीक्षा पद्धत्युक्त क्रमेण घटं
संस्थाप्य तत्तत्कल्पोक्त देवता मावाह्य यथोपचारतः
संपूज्य साध्यमभिषिच्य तस्मै दद्यादिल्यर्थः ।
ततो गुरवे दक्षिणां दत्त्वा महान्तमुत्सवं कुर्यात् ॥३६॥

# द्वितीयः परिच्छेदः ।

—o—

## अथ सामान्यपूजापद्धतिः ।

तत्र ब्राह्मे मुहूर्ते उत्थाय मुक्तस्वापः रात्रिवास-
स्त्यक्त्वा शिरसि सहस्रदलकमलावस्थितं श्वेतवर्णं
द्विभुजं वराभयकरं श्वेतमाल्यानुलेपनं स्वप्रकाश-
रूपं स्वावामस्थितसुरक्तशक्त्या स्वप्रकाशरूपया
सहितं गुरुं विभाव्य मानसोपचारैराराध्य नमस्कुर्यात्

यथा —

अखंडमंडलाकारं व्याप्तं येन चराचरम् ।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ।
ततो मूलादिब्रह्मरन्ध्रान्तं मूलविद्यां विभावयेत् ।
मूलविद्यां कुंडलिनीम् ।

तथा च योगिनी तन्त्रे —

विद्या कुण्डलिनीरूपा मंडलत्रयभेदिनी ॥१॥

अन्यत्रापि —

ध्यायेत् ~~कुण्डल~~ कुंडलिनीं सूक्ष्मां मूलाधारनिवासिनीम्
तामिष्टदेवतारूपां सार्द्धत्रिवलयान्विताम् ।
कोटिसौदामिनीभासां स्वयम्भूलिङ्गवेष्टिताम् ॥

तामुच्चार्य महादेवीं प्राणमंत्रेण साधकः ।
उद्घाटितकरद्योतां यावच्छ्वासं दृढासनः ।
अशोषाशुभशान्त्यर्थं समाहितमनाः शिवम् ।
तत्प्रभापटलं व्याप्तं शरीरमपि चिन्तयेत् ॥२॥
तस्य नित्यत्वमाह गौतमीये —
इदानीं पूर्वकृत्यस्य प्रसङ्गात् कथयामि ते ।
यत् कृत्वाधिकारितां याति मंत्रयंत्रार्चनादिषु ।
येन विना न सिद्धिः स्यान्नरकस्य प्रपद्यते ॥३॥
यामले तु —
प्रातः कृत्यमकृत्वा तु यो देवीं भक्तितोऽर्चयेत् ।
निष्फला तस्य पूजा स्याच्छौचहीना यथा क्रिया ॥४॥
लक्ष्मीकुलार्णवेऽपि —
सन्ध्या तु विहीनो यो न दीक्षाफलमाप्नुयात् ।
इति वचनात्तस्यावश्यकत्वम् ॥५॥
वैदिकसंन्ध्यानन्तरं तांत्रिकसन्ध्या कर्तव्या ।
तदुक्तम् —
वैदिकीं तांत्रिकीं सन्ध्यां यथानुक्रमयोगतः ॥६॥

अथ सन्ध्याप्रयोगः ।

तत्र शारदातिलके —

ॐ आत्मतत्त्वाय स्वाहा, ॐ विद्यातत्त्वाय स्वाहा,
ॐ शिवतत्त्वाय स्वाहा इत्याचामेत् ।

अन्यत्राचमनमाह ।

तथा च स्वतन्त्रतन्त्रे —

आत्मविद्याशिवैस्तत्त्वैरन्र्चयेत् साधकाग्रणीः ।
वह्निजायां ततो दत्त्वा मुखेन पाण्यश्रिये ॥

मालिनीतन्त्रे —

आचमेदात्मतत्त्वाद्यैः प्रणवाद्यैर्द्विठान्तकैरिति ।
ततो जले गङ्गे चेत्यादिना तीर्थमावाह्य मूलेन कुशेन त्रिवारं भूमौ जलं क्षिपेत् । तज्जलेन सप्तवा मूर्ध्नि मभिषिञ्चेत् ।
ततः षडङ्गन्यासं कृत्वा वाम हस्ततले जलं निधाय दक्षिणहस्तेन जलमाच्छाद्य, हं यं वं लं इति त्रिवारमभिमन्त्र्य तत्तेजोरूपं ध्यात्वा इडयाकृष्य देहान्तः पापं प्रक्षाल्य कृष्णवर्णं तज्जलं पापरूपं ध्यात्वा, पिङ्गलया विरेच्य, पुरः कल्पितवज्र-शिलायां फडिति मन्त्रेण पापपुरुषरूपं

तज्जलं क्षिपदित्यघमर्षणम् ।

तथा च गौतमीये —

आचम्य विधिवन्मंत्री शुचौ देशे च संविशेत् ।
जले संयोज्य तीर्थानि त्रिवारं मूलमंत्रतः ।
क्षिपन्भूमौ कुशाग्रेण सप्तधा मूर्ध्नि सेचयेत् ।

तंत्रान्तरे —

पुनराचम्य विन्यस्य षडङ्गमपि धर्मवित् ।
वामहस्ते जलं गृह्य गलितोदकबिन्दुभिः ।
सप्तधा प्रोक्षणं कृत्वा मूर्ध्नि मंत्रं समुच्चरन् ।
अवशिष्टोदकं दक्षहस्ते संगृह्य बुद्धिमान् ।
इड़याकृष्य देहान्तः क्षालितं पापसञ्चयम् ।
कृष्णवर्णं तदुदकं दक्षनाड्या विरेचितम् ।
दक्षहस्ते तु तन्मंत्री पापरूपं विचिन्त्य च ।
पुरतो वज्रपाषाणे निक्षेपेदस्त्रमुच्चरन् ॥7॥

अन्यत्रापि —

षड़ङ्गन्यासमाचर्य वामहस्ते जलं ततः ।
गृहीत्वा दक्षिणे नैव संपुटं कारयेत्ततः।

शिवबीजं जलं पृथिवीवह्निबीजेऽस्थितं पुनः ।
अथ औ मंत्रस्य च मूलेन सप्तधा तत्त्वमुद्रया ।
निक्षिप्य तज्जलं मूर्ध्नि शेषं दक्षे निधाय च ।
शरीरान्तः स्थितं पापं क्षालयेत् साधकाग्रणीः ॥४॥
ततो हस्तौ प्रक्षाल्याचम्य वामहस्ते ह्रीं हंसः ॐ घृणि
सूर्य आदित्य इति मंत्रेण वा सूर्यायार्घ्यं दद्यात् ।
तथा संमोहनतंत्रे —
शिवबीजं वह्निसंस्थं वामनेत्रविभूषितम् ।
बिन्दुनादात्मकं देवि हंसः पदमथो लिखेत् ।
अनेन मनुना मंत्री भास्करस्य प्रियेण तु ।
अर्घ्यं विद्यादिति शेष ।
विशेषस्तु स्नान प्रकरणे वक्तव्यः ॥ ९॥
ततः ओं ॐ सूर्यमंडलस्थायै अमुकदेवतायै
नमः इत्येनेन तद्गायत्र्या त्रिवारं जलं निःक्षिप्य
तत्तद्गायत्रीं जपेत् । ॥१०॥
तथा चार्घ्यानन्तरं ज्ञानार्णवे —
ततश्च प्रजपेद्धीमान् गायत्रीं परमेश्वरीम् ।

गायत्री तु स्नानप्रकरणे वक्तव्या ॥११॥

नन्दिकेश्वरसंहितायाम् —

यावन्न दीयते चार्घ्यं भास्कराय महात्मने ।
तावन्न पूजयेद्विष्णुं शंकरं वा महेश्वरीम् ॥१२॥

गौतमीयतंत्रे —

एवं ते कथिता मंत्राः संध्यामंत्रफलाप्तये ।
न कुर्य्याद्यदि मोहेन न दीक्षाफलमाप्नुयात् ॥१३॥
सन्ध्यात्रयं यथा कुर्याद्ब्राह्मणो विधिपूर्वकम् ।
तंत्रोक्तविधिपूर्वन्तु शूद्रः संध्यां समाचरेत् ।
संक्षेपसन्ध्यामथवा कुर्य्यान्मंत्री ह्यशक्तितः ।
सायं प्रातश्च मध्याह्ने देवं ध्यात्वा मनुं जपेत् ।
सन्ध्यायां पतितायान्तु गायत्री दशधा जपेत् ॥१४॥

अथ स्नानविधिः —

नद्यादौ वैदिकस्नानं कृत्वा तांत्रिकस्नानमाचरेत् ॥१॥

तथा च गौतमीयतंत्रे —

अथ स्नानं तथा कुर्याद् यथाशास्त्रविधानतः ।
मलप्रक्षालनं स्नानं स्वशाखोक्तं समाचरेत् ।

मंत्रस्नानं ततः कुर्यात् कर्मणां सिद्धिहेतवे ॥16॥

तद् यथा —

ॐ अद्येत्यादि अमुकदेवताप्रीतये स्नानमहं करिष्ये इति
सङ्कल्पं कुर्यात् । ॥17॥

तथा च कुलचूडामणौ —

ताम्रपात्रं समुद्धृत्य सलिलं सजलं तथा ।
गृहीत्वामुपदेवस्य प्रीतये स्नानमाचरेत् ॥18॥

षडङ्गन्यास प्राणायामौ कृत्वा ॐ -
गंगे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु-कावेरि जलेऽस्मिन् संनिधिं कुरु ।
इत्यनेनाङ्कुशमुद्रया सूर्यमंडलात्तीर्थमावाह्य,
वमिति धेनुमुद्रया अमृतीकृत्य, कवचेनावगुण्ठ्य
अस्त्रेण संरक्ष्य मूलेनैकादशधाभिमंत्र्य कुम्भमुखं
द्वादश वारिधारां निक्षिप्य, तस्मादिष्टदेवताचरणा-
रविन्दान् स्रुते जले त्रिर्निमज्ज्य देवतां ध्यानं,
मूलमंत्रं यथाशक्ति जपन्, उन्मज्ज्य उदकेन
त्रिवारजप्तेन कलशमुद्रया त्रिवारमात्मानमभिषिच्य,

वैदिकसन्ध्यादिकं कृत्वा, सूर्यार्घ्यं दत्वा, तान्त्रिकाचमनादि वारिधारान्तं कर्म कुर्यात् ॥१९॥

यथा आगमे —

धात्वा जान्वाङ्गुलीन् क्षिप्त्वा तर्पयेदिष्टदेवताम् ॥२०॥

तत्र क्रममाह —

देवांस्तर्पयामि, पितॄंस्तर्पयामि, गुरुं परापरगुरुं परमेष्ठिगुरुञ्च तर्पयेत् ।

तथा च

देवान् ऋषीन् पितॄंश्चैव तत्कल्पोक्तविधानतः गुरुपङ्क्तिं पुरातश्च तर्पयेदिष्टदेवताम् ॥२१॥

विष्णवे तु विशेषः ।

नारदं पर्वतं जिष्णुं निशठोद्धवदारुकम् ।
विश्वक्सेनञ्च शैनयं गुरुञ्च तर्पयेत्तिशः ।

वाक्यन्तु —

ॐ नारदं तर्पयामि इत्यादि क्रमेण प्रयोगः ॥२२॥

ततो मूलमुच्चार्य्य अमुकदेवतां तर्पयामि नमः इति विष्णुविषयम् ।

तथा च गौतमीये —

आदौ मंत्रं समुच्चार्य श्रीपूर्वं कृष्णमित्यपि ।
तर्पयामि पदञ्चोक्त्वा नमोऽन्तं तर्पयेत्ततः ॥२३॥
अन्यत्र मूलमुच्चार्य अमुकदेवतां तर्पयामि ।

तथा च —

तर्पयामि पदं योज्यं मंत्रान्ते च वे नामसु ।
द्वितीयान्तेषु चैवं तर्पणस्य मनुः स्मृतः ॥२४॥
शाक्ते विषये पुनः ।
मूलमुच्चार्य अमुकदेवीं तर्पयामि स्वाहा ।
होमतर्पणयोः स्वाहेति तन्त्रवचनात् ॥२५॥

तथा च नीलतंत्रे —

मंत्रान्ते नाम उच्चार्य तर्पयामि ततः परम् ।
स्वाहान्तं तर्पयेद्देवीमित्यादि ॥२६॥

विशुद्धेश्वरे —

पञ्चविंशतिसंख्या वा दशधा वा त्रिधापि वा ।
मूलमंत्रं समुच्चार्य श्रीकृष्णं तर्पयेत् सुधीः ।
इति गौतमीयात् पञ्चविंशति वारं दशधा त्रिधा वा
सन्तर्पयेत् ॥२७॥ शाक्तविषये त्रिधा तर्पणम् ।

स्नानकर्माणि सम्प्राप्ते मूर्ध्नि मंत्री जलाञ्जलीन् ।
विदध्याच्च त्रिशः कुर्यात् पुतास्तु तिल पयः पिवेत् ।
तर्पणञ्च त्रिधा भूयास्त्रिधा च प्रोक्षणं तनोरिति कुला मृ
तत आवरणदेवतां प्रत्येकेन सकृत्तर्पयेत् ।

तथा च कुलार्णवे —

एकैव मञ्जलिं तोयं परिवारान् प्रतर्पयेत् ।
तथाशक्तश्चेन्मुलमंत्रमुच्चार्य इष्टदेवता मातृ समर्पयेत् ॥

तथा च —

अशक्तौ मूलमुच्चार्य देवीमातृं प्रतर्पयेत् ॥३०॥
ततो जलादुत्थाय धौतवाससी परिधायाचम्य ह्रीं हंसः इदमर्घ्यं
स्वाहा । तंत्रान्तरे — मार्तण्डभैरवाय च ।
सूर्यमंत्रं समुच्चार्य ~~अर्घ्यं दत्त्वा जपेन्मनुम्~~ ।
प्रकाशशक्तिसहिताय इदमर्घ्यं ~~मर्घ्यं स्वाहा~~ ततः पठेत् ।
स्वाहान्तं मंत्रमुच्चार्य अर्घ्यं दत्त्वा जपेन्मनुम् ॥३१॥

श्रीविद्याविषये तु —

ऐं ह्रीं श्रीं हां ह्रीं सः मार्तण्डभैरवाय
प्रकाशशक्तिसहिताय महाशिवलम —

तिर्यग्योगकरणाधीश्वरासहिताय इदमर्घ्यं स्वाहा
इत्यर्घ्यं दत्त्वा, तत्तदेवता-गायत्रीं शतधा दशधा वा
वृद्धवचनात् ॥२८॥ जपेत् ॥३२॥ तथा च तंत्रान्तरे —
अष्टोत्तरशतावृत्त्या गायत्रीं जपेत् सुधीः ।
महापातकयुक्तोऽपि प्रजपेद्दशधा यदि ।
सत्यं सत्यं महादेवि मुक्तो भवति तत्क्षणात् ।
॥२९॥ इति शक्ताशक्तभेदेन ॥ ३३ ॥
गायत्रीजपानन्तरं तर्पणं वा ।
तथा च —
सूर्यमंडलवासिन्यै देवतायै ततः परम् ।
अर्घ्यमञ्जलिमादाय गायत्र्या त्रिरुत्क्षिपेत् ।
यथाशक्ति जपेद्देवीं गायत्रीं परमाक्षरीम् ।
तर्पणार्थं समाचम्य प्राणानायम्य साधकः ।
ध्यात्वा जलाञ्जलिं क्षिप्त्वा तदिष्टदेवताम् ।
इति जामलवचनात् ॥ ३४ ॥
गायत्री तु —
त्रैलोक्यमोहनाय विद्महे कामदेवाय धीमहि तन्नो विष्णु प्रचोदयात्॥

इति विष्णु गायत्री ।
नारायणाय विद्महे वासुदेवाय धीमहि तन्नो विष्णुः प्रचो[illegible]
इति नारायण गायत्री ।
वज्रनखाय विद्महे तीक्ष्णदंष्ट्राय धीमहि तन्नो नरसिंहः
प्रचोदयात् । इति नृसिंह गायत्री ।
वागीश्वराय विद्महे हयग्रीवाय धीमहि तन्नो हंसः
प्रचोदयात् । इति हयग्रीवगायत्री ।
गोपाल गायत्री तु —
कृष्णाय विद्महे दामोदराय धीमहि तन्नो विष्णुः
प्रचोदयादिति
दाशरथाय विद्महे सीतावल्लभाय धीमहि तन्नो रामः
प्रचोदयात् । इति राम गायत्री ।
तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो
रुद्रः प्रचोदयात् । इति शिव गायत्री ।
तत्पुरुषाय विद्महे वक्रतुंडाय धीमहि तन्नो
दन्ती प्रचोदयात् । इति गणेश गायत्री ।
दक्षिणामूर्तये विद्महे ध्यानवस्थाय धीमहि
तन्नो धीशः प्रचोदयात् । इति दक्षिणामूर्ति गायत्री ।

आदित्याय विद्महे मार्तण्डाय धीमहि तन्नः सूर्यः प्रचोदयात् । इति सूर्य गायत्री ।

कामदेवाय विद्महे पुष्पबाणाय धीमहि तन्नोऽनङ्गः प्रचोदयात् । इति कामदेवगायत्री ।

सर्वसंमोहिन्यै विद्महे विश्वजनन्यै धीमहि तन्नः शक्तिः प्रचोदयात् । इति शक्तिगायत्री ।

त्वरितायै विद्महे महानित्यायै धीमहि तन्नो देवी प्रचोदयात् । इति त्वरितागायत्री ।

वागीश्वर्यै विद्महे क्लीं कामेश्वर्यै धीमहि सौः स्तन्नः शक्तिः प्रचोदयात् । इति बालाभैरवी गायत्री

बालाभैरवी

ऐं त्रिपुरादेव्यै विद्महे क्लीं कामेश्वर्यै धीमहि सौस्तन्नः क्लिन्ने प्रचोदयात् । इति त्रिपुरासुन्दरी गायत्री

त्रिपुरायै विद्महे भैरव्यै धीमहि तन्नो देवी प्रचोदयादिति इति भैरवी गायत्री ।

महादेव्यै विद्महे दुर्गायै धीमहि तन्नो देवी प्रचोदयात् । इति दुर्गा गायत्री ।

नारायण्यै विद्महे दुर्गायै धीमहि तन्नो गौरी प्रचोदयात् ।

इति जगद्दुर्गा गायत्री ।

महालक्ष्म्यै विद्महे महाश्रियै धीमहि तन्नः श्रीः प्रचोदयात् । इति लक्ष्मी गायत्री ।
वागदेव्यै विद्महे कामराजाय धीमहि तन्नो देवी प्रचोदयात् । इति सरस्वती गायत्री ।
नारायण्यै विद्महे भुवनेश्वर्यै धीमहि तन्नो देवी प्रचोदयादिति भुवनेश्वरी गायत्री ।
भगवत्यै विद्महे माहेश्वर्यै धीमहि तन्नोऽन्नपूर्णे प्रचोदयात् । इति अन्नपूर्णा गायत्री ।
महिषमर्दिन्यै विद्महे दुर्गायै धीमहि तन्नो देवी प्रचोदयात् । इति महिषमर्दिनी गायत्री ।
वैरोचिन्यै विद्महे छिन्नमस्तायै धीमहि तन्नो देवी प्रचोदयादिति छिन्नमस्तागायत्री ।
कालिकायै विद्महे श्मशानवासिन्यै ~~विद्महे~~ धीमहि तन्नो देवी प्रचोदयात् । इति कालिकागायत्री ।
तारायै विद्महे महोग्रायै धीमहि तन्नो देवी प्रचोदयात् इति तारागायत्री । गरुणाय विद्महे सुपर्णाय धीमहि तन्नो गरुड़ः प्रचोदयात् । इति गरुड़गायत्री । 73

अथ गायत्री ध्यानम् । 

ध्यानन्तु —

प्रातः

उद्यदादित्यसङ्काशां पुस्तकाक्षकरां स्मरेत् ।
कृष्णाजिनधरां ब्राह्मीं ध्यायेत्तारकिते ह्म्बरे ॥35॥

मध्याह्ने —

श्यामवर्णां चतुर्बाहुं शङ्खचक्रलसत्कराम् ।
गदापद्मधरां देवीं सूर्यासनकृताश्रयाम् ॥36॥

सायाह्ने वरदां देवीं गायत्रीं संस्मरेद् यतिः ।
शुक्लां शुक्लाम्बरधरां वृषासनकृताश्रयाम् ।
त्रिनेत्रां वरदां पाशं शूलञ्च नृकरोटिकाम् ।
सूर्यमंडलमध्यस्थां ध्यायन् देवीं समभ्यसेत् ॥37॥

त्रिपुरादौ ध्यानविशेषो यथा —

प्रातराधारकमले हुतभुमंडलोपरि ।
वाग्बीजरूपां विद्यायां विद्युदुत्पलभास्वराम् ।
पुष्पबाणेक्षुकोदंडपाशाङ्कुशलसत्कराम् ।
स्वेच्छागृहीतवपुषीं गुरुविद्यास्वरात्मिकाम् ॥38॥

मध्याह्ने हृदयाम्भोजकर्णिके सूर्यमंडले ।

कामबीजात्मिकां देवीमस्त-ककवसामेणाम् ।
~~कामबीजा~~ प्रसूनबाण पुंड्रक्षु - चापपाशांकुशान्विताम्
परितः स्वात्मसुखाभिः षट्त्रिंशत्तत्त्वशक्तिभिः ॥
मायमाज्ञासरोजस्थे चन्द्रे चन्द्रसमद्युतिम् ।
शक्ति बीजात्मिकां चाप- बाण- पाशांकुशान्विताम् ।
पुरानित्याक्षराकारां शरिकावरणान्विताम् ।
चिन्तयित्वा भगवतीं नित्याभिः परिवारिताम् ॥

तारादौ तु —

ह्रीं हंसं इति सूर्यार्घ्यं दत्वा, ताम्रादि पात्रे
चन्दनाक्त कुसुमापराजिता पुष्पाणि निःक्षिप्य
उद्यदादित्यमंडलमध्यवर्तिन्यै नित्यचैतन्योदितायै
श्रीमदेकजटायै स्वाहा इत्यर्घ्यं दत्वा,
गायत्रीं जपेदिति विशेषः ।

तदुक्तं नीलतंत्रे —

उद्यदादित्य मंडलमध्यवर्तिन्यै च समुद्धरेत् ।
नित्यचैतन्योदितायै स्वाहेति च मनुः स्मृतः ।
अन्यत्र कालिका मंत्रे.
एकजटापदस्थाने कालिकापद प्रयोगः ॥५॥

ततः सूर्यमंडले देवतां विभाव्य, मूलमंत्रं यथाशक्ति
३९॥ जप्त्वा संहारमुद्रया देवतां स्वहृदयमानीयतीर्थं
नमस्कृत्य, वासस्थानमागच्छेदिति स्नानविधिः ॥५२॥
अथ सामान्यार्घ्यस्थापनादिकथनम् ।
ततः सामान्यार्घ्यस्थापनादि आसनोपवेशान्तं
४०॥ दीक्षापद्धत्युक्तं कर्म समाप्य वामे ॐ गुरुभ्यो
नमः, ॐ परमगुरुभ्यो नमः, ॐ परापरगुरुभ्यो
नमः, दक्षिणे ॐ गणेशाय नमः, मूर्ध्नि मूलमुच्चार्य
अमुकदेवतायै नमः ।
तथा च गौतमीये तंत्रे—
कृताञ्जलिपुटो भूत्वा वामे गुरुत्रयं यजेत् ।
गुरुञ्च परमादिञ्च परापरगुरुं तथा ।
दक्षपार्श्वे गणेशञ्च मूर्ध्नि देवं विभावयेत् ।
ततः फडिति मंत्रेण गन्धपुष्पाभ्यां करौ संशोध्य
ऊर्ध्वोर्ध्वतालत्रयं दत्त्वा, छोटिकाभिर्दशदिग्बन्धनं
कृत्वा रमिति जलधारया वह्निप्राकारं विचिन्त्य
भूतशुद्धिं कुर्यात् ॥५३॥

तद्यथा —

स्वाङ्के उत्तानौ करौ कृत्वा सोऽहमिति जीवा-
त्मानं हृदयस्थं दीपकलिकाकारं मूलाधार-
स्थित-कुलकुण्डलिन्या सह सुषुम्नावर्त्मना
मूला मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धा-
ज्ञाख्यषट्चक्राणि भित्त्वा, शिरोऽवस्थिताधोमुख
सहस्रदलकमलकर्णिकान्तर्गत परमात्मनि संयोज्य
तत्रैव पृथिव्यप्तेजोवाय्वाकाश गन्धरसरूपस्पर्श-
शब्द नासिकाजिह्वाचक्षुस्त्वक् पाणि-पाद-वायुपस्थ
प्रकृतिमनोबुद्ध्यहङ्काररूपचतुर्विंशति-तत्त्वानि
विलीनानि विभाव्य, यमिति वायुबीजं धूम्रवर्णं
वामनासापुटे विचिन्त्य, तस्य षोडशवारजपेन
वायुना देहमापूर्य, नासापुटौ धृत्वा, तस्य
चतुःषष्टिवारजपेन कुम्भकं कृत्वा, वाम-
कुक्षिस्थ-कृष्णवर्ण पापपुरुषेण सह देहं संशोष्य
तस्य द्वात्रिंशद्वारजपेन दक्षिणनासया वायुं रेच
दक्षिणनासापुटे रमिति वह्निबीजं रक्तवर्णं
ध्यात्वा तस्य षोडशवारजपेन वायुना देहमापूर्य

नासापुटौ धृत्वा, तस्य चतुः षष्टिवारजपेन कुम्भकं कृत्वा, पापपुरुषेण सह देहं मूलाधारस्थितवह्निना दग्ध्वा, तस्य द्वात्रिंशद्वारजपेन वामनासया भस्मना सह वायुं रेचयेत्।

ठमिति चन्द्रबीजं शुक्लवर्णं वामनासिकायां ध्यात्वा तस्य षोडशवारजपेन ललाटे चन्द्रं नीत्वा, नासापुटौ धृत्वा, वमिति वरुणबीजस्य चतुः षष्टिवारजपेन तस्माल्ललाटचन्द्रात् गलित सुधया मातृकावर्णात्मिकया समस्तदेहं विरच्य, लमिति पृथ्वीबीजस्य द्वात्रिंशद् वारजपेन देहं सुदृढं विचिन्त्य दक्षिणेन वायुं रेचयेत्। मात्रासंख्यया वा।

तदुक्तं गौतमीय तंत्रे —

सुषुम्नावर्त्मना सोऽहमिति मंत्रेण योजयेत्।
सहस्रारे शिवस्थाने परमात्मनि देशिकः।
धूम्रवर्णं ततो वायुबीजं षोडशबिन्दुलाञ्छितम्।
पूरयेदिडया वायुं सुधीः षोडशमात्रया।
मात्रया तु चतुःषष्ट्या कुम्भयेच्च सुषुम्नया।
द्वात्रिंशन्मात्रया मंत्री रेचयेत् पिङ्गलाख्यया।

पेत्।

पूरयेदनया चैव संचिन्त्य नीलमारुतम् ।
रक्तवर्णं वह्निबीजं त्रिकोणं स्वस्तिकान्वितम् ।
तेन पूरकयोगेन मालया षोडशाख्यया ।
चतुःषष्ट्या मालया च निर्दहेत् कुम्भकेन तु ।
वामपार्श्वस्थितं पापपुरुषं कज्जलप्रभम् ।
ब्रह्महत्याशिरस्कञ्च स्वर्णस्तेयभुजद्वयम् ।
सुरापानहृदा युक्तं गुरुतल्पकटिद्वयम् ।
तत्संसर्गि- पादद्वन्द्वमङ्गप्रत्यङ्गपातकम् ।
उपपातकरोमाणं रक्तश्मश्रु-विलोचनम् ।
खड्गचर्मधरं क्रुद्धमेवं कुक्षौ विचिन्तयेत् ।
मूलाधारोत्थिते चैव वह्निना निर्दहेच्च तत् ।
स्वं संदह्य पैरतो द्वात्रिंशन्मात्रया ततः ।
भस्मना सहितं मन्त्री रेचयेदिडया पुनः ।
ललाटस्थं चन्द्रबीजं कुन्देन्दुधवलप्रभम् ।
भालेन्दुराजे संयोज्य ततः षोडशमालया ।
सुषुम्नया चतुःषष्टि मात्रया तोयबीजकम् ।
ध्यात्वामृतमयीं ब्राह्मीं पञ्चाशद्वर्णरूपिणीम् ।
तया देहं विरचयेन्मनसा पिङ्गलाद्वना ।

ह्रीं इत्यात्मना मंत्री लंबीजेन दृढं नयेत् ।
स्वस्थाने हंसमंत्रेण पुनस्तेनैव ~~तन्म~~ वर्त्मना ।
जीवं तत्त्वानि चानीय स्वस्थाने स्थापयेत्ततः ।
इति कृत्वा भूतशुद्धिं मातृकान्यासमाचरेत् ।
ततः हंसः इति बीजं हृदयमानीय कुलकुंडलिनीं
पृथिव्यादीनि यथास्थाने स्थापयेत् ॥ ५५ ॥

विशेषस्तु शक्तिविषये —

हंसः इति जीवादिकं परमशिवे संयोज्य सोऽहमिति
मंत्रेण स्वस्थाने नयेत् ।

तथा च तंत्रान्तरे —

सोऽहमेवं समाभाष्य जीवं हृदि समानयेत् ॥ ५६ ॥

शूद्रे तु विशेषो वाराहीतंत्रे ।

हंसाख्यं न स्मरेत् शूद्रा भूतशुद्धौ कदाचन ।
स्मरणान्नरकं याति दीक्षा च विफला भवेत् ॥ ५७ ॥

सारदायाम् —

जीवं तेजोमयं ध्यात्वा नाममंत्रेण योजयेत् ॥ ५८ ॥

भूतशुद्धिपदव्युत्पत्तिमाह विशुद्धेश्वरतंत्रे—

शरीराकारभूतानां भूतानां पदिशोधनम् ।
अव्ययब्रह्मसंयोगाद् भूतशुद्धिरियं मतेति ॥५४॥

वाराहीतंत्रे—

मूलाधारात्ततो जीवं ब्रह्ममार्गेण देशिकः ।
हंसेन पुष्करस्थाने परमात्मनि योजयेत् ।
ब्रह्ममार्गः सुषुम्ना ॥५७॥

त्रिपुरासारसमुच्चये—

संयोज्य जीवमन्व दुर्गमध्यनाडीमार्गेण पुष्करमिति
ततः आं सोहं इति पठित्वा हृदि हस्तं दत्त्वा प्रतिष्ठां

ज्ञानार्णवे—

प्राणप्रतिष्ठापना पश्चाज्जीवं देहे नियोजयेत ।
मुखवृत्ते समुच्चार्य्य हंसन्तु विपरीतकम् ।
उद्धरेत् परमेशानि विद्येयं त्र्यक्षरी मता ।
प्राणप्रतिष्ठामंत्रोऽयं सर्वकर्म्माणि साधयेत् ।
तेनैव विधिना देवि स्थिरो कुर्य्यात्मजां तनुम् ॥

पुरश्चरणचन्द्रिकायाम् —

अन्यान्यप्रकारेण भूतशुद्धिर्विधीयते ।

धर्मकन्दसमुद्भूतं ज्ञाननालसुशोभनम् ।
ऐश्वर्याष्टदलोपेतं परं वैराग्यकर्णिकम् ।
स्वीयहृत्कमले ध्यायेत् प्रणवेन प्रकाशितम् ।
कृत्वा तत्कर्णिकासंस्थं प्रदीपकलिकानिभम् ।
जीवात्मानं हृदि ध्यात्वा मुखे सञ्चिन्त्य कुण्डलीम् ।
सुषुम्नावर्त्मनात्मानं परमात्मनि योजयेत् ॥५२॥

## अथ मातृकान्यासः

तत्र ~~मातृकान्यास~~ मातृकया ऋष्यादिन्यासः ।

प्रकाशिते सुषुम्ना ॥५०॥ कुर्यात् ।

अस्य मातृकामन्त्रस्य ब्रह्म ऋषिर्गायत्रीच्छन्दो
मातृकासरस्वती देवता हलो बीजानि स्वराः
शक्तयः मातृकान्यासे विनियोगः । शिरसि ॐ
ब्रह्मणे ऋषये नमः, मुखे ॐ गायत्रीच्छन्दसे
नमः, हृदि ॐ मातृकासरस्वत्यै देवतायै नमः।
गुह्ये ॐ व्यञ्जनेभ्यो बीजेभ्यो नमः, पादयोः
स्वरेभ्यः शक्तिभ्यो नमः ।

५१॥ तथा च ज्ञानार्णवे ~~मातृकां शृणु देवेशि~~

मातृकां शृणु देवेशि न्यासेत् पापनिकृन्तनीम् ।
ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्रीच्छन्द उच्यते ।

देवता मातृका देवी बीजं व्यञ्जनमुच्यते ।
शक्तयस्तु स्वरा देवी षड़ङ्गन्यासमाचरेत ।

तत: कराङ्गन्यासौ ।

अं कं खं गं घं ङं आं अङ्गुष्ठाभ्यां नम: ।
इं चं छं जं झं ञं ईं तर्जनीभ्यां स्वाहा ।
उं टं ठं डं ढं णं ऊं मध्यमाभ्यां वषट् ।
एं तं थं दं धं नं ऐं अनामिकाभ्यां हुं ।
ओं पं फं बं भं मं औं कनिष्ठाभ्यां वौषट् ।
अं यं रं लं वं शं षं सं हं क्षं करतलपृष्ठाभ्यां ।

इति हृदयादिषु ।

अं आं मध्ये कवर्गन्तु इं ईं मध्ये चवर्गकम् ।
उं ऊं मध्ये टवर्गन्तु एं ऐं मध्ये तवर्गकम् ।
ओं औं मध्ये पवर्गन्तु बिन्दु युक्तं न्यासेत् प्रिये ।
अनुस्वार विसर्गान्तौ यशवर्गौ सलक्षकौ ।
हृदयञ्च शिरो देवि शिखा कवचकं तथा ।
नेत्रमस्त्रं न्यासेत ङेऽन्तं नम: स्वाहा क्रमेण तु ।
वषट् हुं वौषड़स्त्रञ्च फड़न्तं योजयेत् प्रिये ।
षड़ङ्गोऽयं मातृकाया: सर्वपापहर: स्मृत: ।

अथान्तमातृका अगस्त्यसंहितायाम् —

एकैकवर्णान्नैकैकस्थाने विन्यसेत् प्रिये ।

अकारादि षोडशस्वरान् सबिन्दून् षोडशदलकमले कंठमूले न्यसेत् ।

ककारादि द्वादशवर्णान् सबिन्दून् द्वादशदलकमले मूलाधारे द्वादशकमले हृदये न्यसेत् ।

डकारादि दशवर्णान् सबिन्दून् दशदलकमले नाभौ न्यसेत् ।

बकारादि सबिन्दून् षड्दलकमले मूलाधारे न्यसेत् ।

हक्षवर्णद्वयं द्विदलकमले भ्रूमध्ये न्यसेत् ।

नाभौ षट् ।

तथा च गौतमीये —

धूम्रामाम्बुजे कंठे स्वरान् षोडश विन्यसेत् ।

द्वादशच्छद हृत्पद्मे कादीन् द्वादश विन्यसेत् ।

षट् पत्रमध्ये लिङ्गस्थे बकारादीन् न्यसेद् बट् ।

आधारे चतुरो वर्णान् न्यसेद्वादीन् चतुर्दले ।

हक्षौ भ्रूमध्यगे पद्मे द्विदले विन्यसेत् प्रिये ।

एवमन्तः प्रविन्यस्य मनसातो बहिर्न्यसेत् ।

वैष्णवे तु —

एकैकवर्णमुच्चार्य मूलाधाराच्छिरोन्तकम् ।

न्यासोऽयं शर्व विन्यास आन्तरः परिकीर्तितः ।

अथान्तर्मातृकान्यासो मूलाधारे चतुर्दले ।
सुवर्णाभे वशषसचतुर्व्वर्णविभूषिते ।
षड्दले वैद्युतनिभे स्वाधिष्ठानेऽनलान्विषि ।
बभमयरलैर्युक्ते व्वर्णैः षड्भिश्च सुव्रते ।
मणिपूरे दशदले नीलजीमूतसन्निभे ।
डादिफान्तदलैर्युक्ते विद्युदभासितमस्तके ।
अनाहते द्वादशारे प्रवालरुचिसन्निभे ।
कादिठान्तदलैर्युक्ते योगीनां हृदपङ्कजे ।
विशुद्धे षोड़शादले धूम्राभे स्वभूषिते ।
आज्ञाचक्रे तु चन्द्राभे द्विदले हक्ष हलाङ्किते ।
सहस्रारे हिमनिभे सर्व्ववर्णविभूषिते ।
अकथादित्रिरेखाभे हलक्षत्रयभूषिते ।
तन्मध्ये परबिन्दुश्च सृष्टिस्थितिलयात्मकम् ।
एवं समाहितमना ध्यायेन्न्यासोऽहयन्तमान्तरः ॥53॥

## अथ बाह्यमातृकाध्यानम् ।

पञ्चाशल्लिपिभिर्व्विभक्तमुखदोः पन्मध्यवक्षःस्थ
भास्वन्मौलिनिबद्धचन्द्रसकलामापीनतुङ्गस्तनीम् ।
मुद्रामक्षगुणं सुधाढ्यकलसं विद्याञ्च हस्ता-

मातृकाः
मुञ्जीर्विप्राणां विप्रभ्रमा विनयानां वाग्देवता
माश्रये। एवं ध्यात्वा न्यसेत्।

तत्र अङ्गुलिनियमस्तन्त्रे —

ललाटेऽनामिकामध्ये विन्यसेन्मुखपङ्कजे।
तर्जनीमध्यमानामा वृद्धानामा च नेत्रयोः।
अंगुष्ठं कर्णयोर्न्यस्य कनिष्ठाङ्गुष्ठको नसोः।
मध्यानामिके मध्यानामिके गन्डयोस्तु मध्यमा त्वोष्ठयोर्न्य-
सेत्। अनामां दन्तयोर्न्यस्य मध्यमा मुक्तमाङ्के।
मुखेऽनामां मध्यमा च हस्ते च पार्श्वयोः।
कनिष्ठानामिकामध्यास्तास्तु पृष्ठे च विन्यसेत्।
ताः सांगुष्ठा नाभिदेशे सर्वाः कुक्षौ च विन्यसेत्।
हृदये च तलं सर्वं यंशयोश्च ककुत्स्थले।
हृत्पूर्वं हस्तपत्कुक्षिमुखेषु तलमेव च।
एतास्च मातृकामुद्रा क्रमेण परिकीर्तिताः।
अज्ञात्वा विन्यसेद्यस्तु न्यासः स्यात्तस्य निष्फलः।
इति। गौतमीयतन्त्रे —

ललाटमुखवृत्ताक्षिश्रुतिघ्राणेषु गन्डयोः।
उष्ठदन्तोत्तमाङ्गास्यदोः पत्सन्ध्यग्रकेषु च।

पार्श्वयो, पृष्ठतो नाभौ जठरे हृदयेऽंसके।
ककुदंशे च हृत्पूर्व पाणियुग्मे पादयुग्मे तथा।
जठराननयोर्न्यस्य मातृकार्णान् यथाक्रमम्।

तद् यथा —

अं नमो ललाटे, आं नमो मुखवृत्ते, इं ईं चक्षुषो:,
उं ऊं कर्णयो:, ऋं ॠं नसो:, लृं लॄं गन्डयो:,
एं पृष्ठे, ऐं अधरे, ओं उर्ध्व दन्ते, औं अधोदन्ते,
अं ब्रह्मरन्ध्रे, अ: मुखे।
कं दक्षबाहुमूले, खं कर्परे, गं मणिबन्धे,
घं अङ्गुलिमूले, ङं अङ्गुल्यग्रे।
एवं चं छं जं झं ञं वामबाहुमूलसन्ध्यग्रकेषु।
एवं टं ठं डं ढं णं दक्षपादमूल सन्ध्यग्रकेषु।
एवं तं थं दं धं नं वामपादमूलसन्ध्यग्रकेषु।
पं दक्षपार्श्वे, फं वामपार्श्वे, बं पृष्ठे, भं नाभौ,
मं उदरे, यं हृदि, रं वामबाहुमूले,
शं हृदादिदक्षकरे, षं हृदादिवामकरे
सं हृदादिदक्षपादे, हं हृदादिवामपादे,
लं हृदादिउदरे, क्षं हृदादिमुखे,

सर्वत्र नमोऽन्तेन न्यसेत् ।

तदुक्तञ्च —

उभयान्तौ वा सबिन्दुर्बिन्दुवर्जितः (नमोऽन्तो)

पञ्चाशद्वर्णविन्यासः क्रमादुक्तो मनीषिभिः ।

इति राघवभट्टः ॥54॥

अथ संहारमातृकान्यासः ।

अस्या ध्यानं यथा —

अक्षस्रजं हरिणपोतमुदग्रटङ्कं,

विद्यां करैरविरतं दधतीं त्रिनेत्राम् ।

अर्द्धेन्दुमौलिमरुणामरविन्दवासां

वर्णेश्वरीं प्रणमत स्तनभारनम्राम् ।

न्यासस्तु क्षकारादि अकारान्तः ।

यथा —

क्षं नमो हृदादि गुरवे इत्यादि ।

अपरञ्च —

चतुर्धा मातृका प्रोक्ता केवला बिन्दुसंयुता ।

सविसर्गा सोभया च रहस्यं शृणु कथ्यते ।

विद्याकरी केवला च सोभया भुक्तिदायिनी ।

पुनदा सर्वसर्गा तु सर्वेन्दुर्व्व नादायिनी।

विशुद्धेश्वर तंत्रे —

वाग्भवाद्य च वाक्सिद्धौ रमाद्या श्रीप्रवृद्धये।
हल्लेखाद्या सर्व्वसिद्धौ कामाद्या लोकवश्यदा।
श्रीकन्दाद्यानि मान्यस्य सर्व्वमंत्राः प्रसीदति ॥५५॥

श्रीविद्याविषये नवरत्नेश्वर —

वाग्भवाद्या नमो हन्ताश्च न्यस्तव्या मातृका सदा।
श्रीविद्याविषये मंत्री वाग्भवाद्यष्टसिद्धये ॥५६॥

आगमे —

एतशुद्धाक्षिपिन्यासौ विना यस्तु प्रपूजयेत्।
विपरीतफलं दद्यादभक्त्या पूजनं यथा ॥५७॥

सामान्यन्यासे अंगुलिनियमस्तु गौतमीयतंत्रे —
मनसा विन्यसेन्न्यासान् पुष्पेणैवाथवा मुने।
अंगुष्ठानामिकाभ्यां वा चान्यथा विफलं भवेत्॥

विशेषन्यासे तु नायं नियमः।
श्यामादि विद्यायां विशेषमातृकान्यासो वक्तव्यः॥

प्राणायामे अंगुलिनियमस्तु ज्ञानार्णवे —
कनिष्ठानामिकाङ्गुष्ठैर्यन्नासापुट धारणम्।

प्राणायामः स विज्ञेयस्तर्जनीमध्यमे विना ॥६०॥

प्राणायामो द्विविधः —

सगर्भो निर्गर्भश्च ।

तथा च —

सगर्भो मंत्रजापेन निर्गर्भो मात्रया भवेत् ॥६१॥

मात्रा च वामजानुर्मि तद्धस्तभ्रामणं यावता भवेत् ।

कालेन मात्रा सा ज्ञेया मुनिभिर्वेदपारगैः ॥६२॥

अथ प्राणायामः ।

मूलमंत्रस्य बीजस्य प्रणवस्य वा षोडशवारजपेन वामनासापुटेन वायुं पूरयेत्

तथा च कालिकाहृदये —

प्राणायामत्रयं कुर्यान्मूलेन प्रणवेन वा ।

अथवा मंत्रबीजेन यथाक्रविधिना सुधीः ।

तस्य चतुःषष्टिवारजपेन वायुं कुम्भयेत् ।

58॥ तस्य द्वात्रिंशतवारजपेन वायुं रेचयेत् ।

पुनर्दक्षिणेनापूर्य उभाभ्यां कुम्भयित्वा वामेन रेचयेत् ।

59॥ पुनर्वामेनापूर्य उभाभ्यां कुम्भयित्वा दक्षिणेन रेचयेत् ।

सारसमुच्चये —

विपरीतमतो विदध्यात बुधः पुनरेषतु तद्विपरीतमिति ।

पौगिके पुनर्मात्रानियमः ।

तथा गौतमीय तंत्रे —

मंत्रप्राणायामः प्रोक्तो यौगिकः कथयामि ते ।
पूरयेद्वामशाविद्वान् मात्रा षोड़शसंख्यया ॥इति॥
यद्वा चतुः षोड़शाष्टवारजपेन पूरकादिकं कुर्यात् ।
अथवा एकचतुर्द्विवारेण ।

तथा च तंत्रान्तरे —

पूरयेत् षोड़शैर्मात्रैर्धारयेच्च चतुर्गुणैः ।
रेचयेत् कुम्भकार्द्धेन अशक्तस्तत्त्वरीयकैः ।
तदशक्तौ तच्चतुर्थैः स्यादेवं प्राणस्य संयमः ।
अस्य नित्यत्वमाह स एव —
प्राणायामं विना मंत्रपूजनेन हि योग्यता ।

निबन्धे —

आद्यावन्ते च यत्नेन प्राणायामं समाचरेत् ।
कर्म्मस्वपि समस्तेषु शुभेष्वप्यशुभेषु च ।
गोपाले तु विशेषो वक्तव्यः ॥ 63 ॥

अथ पीठन्यासः ।

ॐ आधारशक्त्यै नमः, एवं प्रकृत्यै, कूर्माय, अनन्ताय पृथिव्यै, क्षीरसमुद्राय श्वेतद्वीपाय मणिमंडपाय, कल्पवृक्षाय, मणिवेदिकायै, रत्नसिंहासनाय ।
~~सर्व~~ एतत् सर्वं हृदि ।
ततो दक्षिणस्कन्धे धर्माय, वामस्कन्धे ज्ञानाय, वामोरौ वैराग्याय दक्षिणोरौ ऐश्वर्याय, मुखे अधर्माय, वामपार्श्वे अज्ञानाय, नाभौ अवैराग्याय, वामपार्श्वे अनैश्वराय, सर्वत्र प्रणवादि मोहनोन न्यसेत् ।

तथा च शारदा तिलके —
अंसोरुयुग्मयोर्विद्वान् प्रादक्षिण्येन साधकः ।
धर्मं ज्ञानञ्च वैराग्यमैश्वर्यं क्रमशः सुधीः ।
मुखपार्श्वे नाभिपार्श्वे ह्यधर्मादीन् प्रकल्पयेदिति ।
पुनश्च हृदि ।
ॐ अनन्ताय नमः एवं पद्माय, अं सूर्यमंडलाय द्वादशकलात्मने नमः, सं सत्वाय रं रजसे, तं तमसे, आं आत्मने, अं अन्तरात्मने, पं परमात्मने, ह्रीं ज्ञानात्मने नमः, इत्यन्तं विन्यस्य हृत्पद्मस्य

पृथ्व्यादिकेशरेषु षोडशान्तेऽम्बुजे पीठमनुञ्च न्यसेत्।

सारदायाम् —

अनन्तं हृदये तस्मिन् सूर्येन्दुपावकान्।
तेषु स्वस्वकलां न्यस्य नामाद्याक्षरपूर्वकम्।
सत्वादीन् त्रिगुणान् न्यस्य तथैवाद्य गुरुतमः।
आत्मानमन्तरात्मानं परमात्मानमेव च।
ज्ञानात्मानं प्रविन्यस्य न्यसेत् पीठमनुं ततः॥६४॥

अथ ऋष्यादिन्यासः।

महेश्वरमुखाज्ज्ञात्वा यः ~~साक्ष्य~~ साक्षात्तपसा मनुम्।
संसाधयति शुद्धात्मा स तस्य ऋषिरीरितः॥६५॥
गुरुत्वान्मस्तके चास्य न्यासस्तु परिकीर्तितः॥६६॥
सर्वेषां मंत्रतत्त्वानां छादनाच्छन्द उच्यते।
अक्षरत्वात् पदत्वाच्च मुखे च्छन्दः समीरितम्॥६७॥
सर्वेषामेव जन्तूनां भाषणात् प्रेरणात्तथा।
हृदयाम्भोजमध्यस्था देवता तत्र तां न्यसेत्॥६८॥
ऋषिच्छन्दो ह्यपरिज्ञानान्न मंत्रफलभाग्भवेत्।
दौर्बल्यं याति मंत्राणां विनियोगमजानताम्॥६९॥

तंत्रान्तरे —

ऋषिं न्यसेन्मूर्ध्नि देशे छन्दस्तु मुखपङ्कजे।
देवतां हृदये चैव बीजन्तु गुह्यदेशके।
शक्तिञ्च पादयोश्चैव सर्वाङ्गे कीलकं न्यसेत् ॥७०॥
ततस्तु तन्मन्त्रोक्तन्यासान् कुर्वीत।

तदुक्तं ज्ञानार्णवे —

आगमोक्तेन विधिना नित्यं न्यासं करोति यः।
देवताभावमाप्नोति मन्त्रसिद्धिः प्रजायते ॥७१॥
यो न्यासकवचच्छन्नो मन्त्रं जपति तं प्रिये।
(७२) दृष्ट्वा विघ्नाः पलायन्ते सिंहं दृष्ट्वा यथा गजाः।
अकृत्वा न्यासजालं यो मूढत्वात् प्रजपेन्मनुम्।
(७३) सर्वैर्विघ्नैः स बाध्यः स्याद्व्याघ्रैर्मृगशिशुर्यथा।

अङ्गन्यासे अङ्गुलिनियमस्तु —

त्रिद्व्येकदशक-त्रिद्विसंख्यया शैलसम्भवे।
६७॥ अंगुलिनामिति वचनादिति सर्वत्र साधारणम् ॥७४॥

राघवभट्टधृत जामलग्रन्थे —

हृदयं मध्यमानामातर्जनीभिः स्मृतं शिरः।
मध्यमातर्जनीभ्यां स्यादङ्गुष्ठेन शिखा तथा।
दशभिः कवचं प्रोक्तं तिसृभिर्नेत्रमीरितम्।
प्रोक्ताङ्गुलीभ्यां मन्त्रं स्यादङ्कतलं शिरे यथा। इति।

तिसृभिस्तर्जनीमध्यमानामाभिः ॥ 75 ॥

तर्जनी मध्यमानाभ्यां प्रोक्ता नेत्रत्रयं क्रमात् ।
यदि नेत्रद्वयं पूर्वं शिरसे वह्निवल्लभा ।
इति राघवभट्टधृतवचनात् ॥ 76 ॥

तर्जनीमध्यमाभ्यां ।

हृदयादिषु विन्यस्येदङ्गमन्त्रान् सुधीः ।
हृदयाय नमः पूर्वं शिरसे वह्निवल्लभा ।
शिखायै वषडित्युक्तं कवचाय हुमीरितम् ।
नेत्रत्रयाय वौषट् स्यादस्त्राय फडिति क्रमात् ।
षड् षडङ्ग मन्त्रानित्युक्तान् षडङ्गेषु नियोजयेत् ॥
पञ्चाङ्गानि मनोर्यत्र तत्र नेत्रमनुं त्यजेत् ।
इति सारदातिलक वचनम् ॥ 78 ॥

वैष्णवे तु —

अनंगुष्ठा ऋजवो हस्तशाखा भवेन्मुद्रा हृदये शीर्षके हा
अधोङ्गुष्ठा खलु मुष्टिः शिखायां करद्वन्द्वाङ्गुलयो वर्मणि सु
नाराचमुष्ट्युद्धृतबाहुयुग्मकाङ्गुष्ठतर्जन्युदितो ध्वनिः स
(79) विष्वग्विशक्ता कवितास्त्रमुद्रा पञ्चाक्षिणी तर्जनी म
अङ्गहीनस्य मन्त्रस्य स्वेनैवाङ्गानि कल्पयेत् ।

तथा च ब्रह्मयामले —

स्वनामाद्याक्षरं बीजं सर्वैर्वाममिधीयते ॥ ४० ॥

ततस्तु तत्तत्कल्पोक्त मुद्रां प्रदर्श्य ध्यानं कृत्वा मानसैः संपूज्य शंखस्थापनम् कुर्यात् ।

तथा च सनत्कुमार तंत्रे —

अकृत्वा मानसं यागं न कुर्याद्बहिरर्चनम् ॥ ४१ ॥

शंखस्थापनन्तु दीक्षाप्रकरणे उक्तम् ॥ ४२ ॥

ततः शरीरे धर्मादिपूजा ।

तथा च सारदातिलके —

॥७७॥ न्यासक्रमेण देहेषु धर्मादीन् पूजयेत्ततः ।
पुष्पाद्यैः पीठमन्त्रान्तं तस्मिंश्च परदेवताम् ।

इति दर्शनात् शरीरे पीठपूजा ॥ ४३ ॥

## ततः पीठ पूजा ।

(पी०४) पीठस्योत्तरे गुरुपङ्क्तीः पूजयेत् ।

यथा —

वाग्भवादीशपर्यन्तं ॐ गुरुभ्यो नमः ॐ परम गुरुभ्यो नमः
ॐ परापरगुरुभ्यो नमः ॐ परमेष्ठि गुरुभ्यो नमः ॥ ४४ ॥

त्रिपुरादौ तु विशेषगुरुपूजा वक्तव्या ॥ ४५ ॥

पीठमध्ये आधारशक्ते नमः, ॐ प्रकृत्यै कूर्माय शेषाय

हावेच । स्तु: । स्तु । मध्यमे च्या ।

पृथिव्यै क्षीरसमुद्राय श्वेतद्वीपाय मणिमण्डपाय कल्पवृक्षाय मणिवेदिकायै रत्नसिंहासनाय । आग्नेयकोणे धर्माय । निर्ऋतिवाय्वीशानेषु ज्ञानं वैराग्यं ऐश्वर्यञ्च पूजयेत् । ततः पूर्वादिदिक्षु अधर्माज्ञानावैराग्यानैश्वर्यान् पूजयेत् मध्ये अनन्तादि ह्रीं ज्ञानात्मने नमः इत्यन्तं सम्पूज्य पूर्वादिकेसरेषु तत्तत्कल्पोक्तपीठशक्तीः संपूज्य मध्ये पीठमनुं प्रपूजयेत् ॥८६॥ तारादिविद्यादौ तु विशेषो वक्तव्यः ॥८७॥

पूजादि दिङ्नियमस्तु ज्ञानमाले —

पूज्य पूजकयोर्मध्यं प्राचीति कथ्यते बुधैः ।
तद्दक्षिणं स्मृतं वामं चोत्तरं स्मृतम् ॥८८॥
पृष्ठन्तु पश्चिमं ज्ञेयं सर्वत्रैवं प्रयोजयेत् ।
अनेन विधिना मंत्री पूर्वादौ पूजनं चरेत् ॥८९॥

जीवविशेषे यंत्रनियमस्तु मत्स्यसूक्ते —

अनुकल्पे यंत्रन्तु लिखेत्पद्मं दलाष्टकम् ।
षट्कोणकर्णिकं तत्र वेदद्वारोपशोभितम् ॥९०॥

ततः पुनर्ध्यात्वा आवाहनादि प्रतिष्ठान्तं कर्म कुर्यात् आवाहने तु विशेषो यथा, आगमकल्पद्रुमे —

मूलमंत्रं समुच्चार्य सुषुम्नावर्त्मना सुधीः ।
आनीय तेजः स्वस्थानान्नासिकारन्ध्रनिर्गतम् ।
करस्थे मातृकाम्भोजे चैतन्यं पुष्पसंचयेत् ।
संयोज्य पुष्पमध्ये तत् संस्थाप्यावाहयेत्ततः ॥९२॥
ततः षोडशोपचारैः पञ्चोपचारैर्वा पूजयेत् ॥९३॥

षोडशोपचारनियमस्तु —

आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् ।
मधुपर्काचमनस्नानं वसनाभरणानि च ।
सुगन्धिसुमनो धूपदीपनैवेद्यवन्दनम् ।
प्रयोजयेदर्च्चनायामुपचारांस्तु षोडश ॥९४॥
अथवा द्रव्याभावे पञ्चोपचारान् कल्पयेत् ।
(९५) गन्धादयो नैवेद्यान्ता पूजा पञ्चोपचारिका इति ॥
विष्णुविषये तु अर्घ्याद्याः पञ्चापञ्चैव
गन्धाद्या इति च भेदत
प्रयोजयेदर्च्चनायामुपचारान् दश क्रमात् ॥९६॥
(९७) ततः पुष्पपर्यन्तमुपचारं तत्तन्मंत्रेण दत्त्वा षडङ्गेन पूजयेत्

पुष्पदाने तु विशेषः —

९१ ॥ पुष्पं वा यदि वा पत्रं सर्वं नेष्टमधोमुखम् ।
दुःखदं तत्समाख्यातं यथोत्पन्नं तथार्पणम् ।

अधोमुखं फलं नेष्टं पुष्पाञ्जलिविधौ न च ॥९८॥
ततो मूर्द्धहृद्गुह्यपादसर्वाङ्गेषु मूलेन
पञ्चपुष्पाञ्जलीन् दत्वा तत्तत्कल्पोक्तावरणपूजां

तथा च —
पञ्चपुष्पाञ्जलीन् परिवारार्चनं चरेदिति मन्त्रः ॥९९॥

ततो धूपदीपौ दद्यात् ।

तद्यथा —
जयध्वनिमन्त्रमातः स्वाहेति पुष्पाक्षतैर्घण्टां
संपूज्य वामहस्तेन तां वादयन् तत्तमन्त्रेण
नीचैर्धूपं दद्यात् ॥१००॥
ततो मूलेन पुष्पाञ्जलित्रयं दत्वा नैवेद्यमानीय,
फडिति संप्रोक्ष्य, चक्रमुद्रया संरक्ष्य
तदुपरि मूलमष्टधा जप्त्वा धेनुमुद्रया अमृतीकृत्य
मूलमुच्चार्य नैवेद्यं दद्यात् ।
यत्तोयमध्यमर्घ्यपात्रस्य तान्नैवेद्यं निवेदयेत् ।
अन्यतोये पयः उत्सृष्टमर्घ्यपात्रस्थैरेतैरपि
न गृह्णाति महादेवी दत्तं विविधशतैरपि ।
इति वचनाद्यावदुपचारमर्घ्यपात्रस्य
जलेनोत्सृजेद् दद्यात् ॥१०१॥

कुर्य्यात् । ततः पुनराचमनीयं दत्वा ताम्बूलं दद्यात् ।

वैष्णवे तु नैवेद्ये विशेषो वक्तव्यः ॥२॥

ततः सपरिवारदेवतां गन्धादिभिरभ्यर्च्य

नृत्यगीतैर्देवं सन्तोष्य, जपजापेत्युक्त्वा विशेषा-

र्घ्यं दत्वा पुष्पांजलिं दद्यात् ॥३॥

दाने तु —

आदौ मूलं ततो द्रव्योल्लेखः ततः सम्प्रदानं

ततस्त्यागार्थकपदमिति सर्व्वत्र ।

तथा च कुलार्णवे —

आदौ मूलं समुच्चार्य्य पश्चाद्‌द्रव्यमुदीरयेत् ।

सम्प्रदानं तदन्तु तु त्यागार्थकपदन्ततः ।

एवं क्रमेण देवेशि उपचारान् प्रकल्पयेत् ।

मंत्रान्ते कर्मसन्निपात इति न्यायाच्च ॥५॥

ततश्चुल्लुकोदकमादाय इतः पूर्व्वं प्राणबुद्धिदेह-

धर्माधिकारतो जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा

वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत्

समर्पयामि ॐ तत्सत् ।

नमस्कारनन्तरं वा ॥5॥

ततोऽष्टोत्तरसहस्रं शतं वा जप्त्वा, ॐ गुह्याति-

गुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम्। ।

सिद्धिर्भवतु मे देव त्वत्प्रसादात् त्वयि स्थिते।

अन्यत्र गोप्त्री देवीति विशेषः।

इति जपं समर्प्य स्तुत्वाष्टाङ्ग प्रणामं कुर्यात्॥6॥

अष्टाङ्गप्रणामो यथा —

पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा दृशा।

वचसा मनसा चैव प्रणामोऽष्टाङ्ग ईरितः॥7॥

बाहुभ्यां चैव जानुभ्यां शिरसा वचसा दृशा।

पञ्चाङ्गोऽयं प्रणामः स्यात् पूजासु प्रवराविमौ॥8॥

भूमौ निपत्य यः कुर्यात् कृष्णेऽष्टाङ्गं नतिं सुधीः॥

सहस्रजन्मजं पापं त्यक्त्वा वैकुण्ठमाप्नुयात्॥9॥

तथा च —

वेदविद्भ्यो धरां दत्त्वा यत् फलं लभते नरः।

तत् फलं लभते भक्त्या कृष्णे कृत्वा प्रदक्षिणम्॥

कृष्ण इत्युपलक्षणम्।

विश्वसारे —

शंखहस्तेन सव्येन दक्षिणं परिकीर्तितम् ॥१०॥

यत्तु आगमे —

त्रिकोणाकारा सव्येन नीतिः शम्भोः समीरितः।
दक्षिणाद्वायवीं गत्वा दिशस्तस्माच्च शाम्भवीम्।
ततश्च दक्षिणं गत्वा नमस्कारस्त्रिकोणवत् ॥११॥
अर्द्धचन्द्रं महेशस्य पृष्ठतश्च समीरिता।
शिवप्रदक्षिणे मंत्री अर्द्धचन्द्रक्रमेण तु।
सव्यासव्यक्रमेणैव सोमसूत्रं न लङ्घयेत्।
सोमसूत्रं जलार्धः स्मरणस्थानम् ॥१२॥
प्रसार्य दक्षिणं हस्तं स्वयं नम्राशिरा पुनः।
दर्शयेद्दक्षिणं पार्श्वं नमसाथ च दक्षिणम्।
त्रिधा च वेष्टयेत् सम्यग् देवताया प्रदक्षिणम् ॥१३॥
एकहस्तप्रणामश्च एकं वाथ प्रदक्षिणम्।
अकाले दर्शनं विष्णोर्हन्ति पुण्यं पुराकृतम् ॥१४॥
देवताङ्ग आवरणदेवता विभाव्य क्षमस्वेति विसर्जनं
कृत्वा, संहारमुद्रया तत्तेजः पुष्पैः सार्द्धं
स्वहृदयमानयेत्।

तथा च —

निधाय देवतां पश्चात् स्वीयहृत्सरसीरुहे
सुषुम्नावर्त्मना पुष्पमाघ्रायोद्वासयेत्ततः ॥१५॥
ऐशान्यां त्रिकोणमंडलं कृत्वा निर्माल्यशेषं
दद्यात् ।

। वैष्णवे —

तु — ॐ विश्वक्सेनाय नमः ।
शाक्ते — शेषिकायै नमः, शैवे तु — चंडेश्वराय नमः
सूर्ये — ॐ तेजश्चन्डाय नमः गणेशे - उच्छिष्टगणेशाय
नमः, कालिकादौ — ॐ उच्छिष्टचान्डालिन्यै नमः
तथा च — विश्वक्सेन स्मृतो विष्णोस्तेजश्चंडो
विवस्वत इत्यादि ।

तथा च निबन्धे —

सूर्ये गणपतावुग्रे शाक्ते शैवे हव वैष्णवे ।
तेजश्चन्डमथोच्छिष्ट मोज मुच्छिष्ट शेषिकाम् ।
चान्डालिनी शेषिकाञ्च विश्वक्सेन क्रमाद्यजेत् ।
ओज इति उमा शम्भुना सह वर्त्तते इति सोदुर्गात्मजो गणेशः ;

ततः पादोदकं पात्वा नैवेद्यं किञ्चित्

(17) स्कातय ~~मांसादि~~ अन्यथा योग्याय दत्वा यथासुखं विहरीदीति ।

सात्वसुक्ते —

अनिवेद्यं न भुञ्जीत मत्स्य मांसादिकञ्च यत् ।
अन्नं विष्ठा तथो मूत्रं यद्विष्णोरनिवेदितम् ।
विष्णोरिति देवतापरम् ॥ १८ ॥

तथा च भैरवतन्त्रे —

हृदये वीहृर्देवीं समर्प्य विधिवत्ततः ।
निर्माल्यञ्च शुचौ देशे नैवेद्यं भक्षयेत् सुधीः ॥ १९ ॥

तन्त्रान्तरे —

निर्माल्यं शिरसा धार्यं सर्वाङ्गे चानुलेपनम् ।
नैवेद्यं चोपभुञ्जीत दत्वा तदभक्तिशालिने ।
देवताचर्याविशिष्टं यत् सलिलं शंखमध्यगम् ।
अङ्गलग्नं मनुष्याणां ब्रह्म हत्यां व्यपोहति ॥ २० ॥

दैवो मन्त्राः ।

~~अथ भुवनेश्वरी मंत्रः~~ ।

यामाहुराद्यां प्रकृतिं मुनीशाः यथा
त्रिशक्तिं गिरमक्षरूपाम् ।
नित्याञ्च च दुर्गां त्वरितां तथान्यां

भजामि नित्यं भुवनेश्वरीं ताम् ॥ २१ ॥

अथ वक्ष्ये जगद्धात्री मधुना भुवनेश्वरीम् ।

ब्रह्मदायोऽपि यां ज्ञात्वा लेभिरे परमां श्रियम् ॥ २२ ॥

अथ भुवनेश्वरी मंत्राः —

नकुलीशोऽग्निमारूढो वामनेत्रार्द्धचन्द्रवान् ।

बीजं तस्याः समाख्यातं सेवितं सिद्धिकांक्षिभिः ।

नकुलीशो हकारः, अग्नि रेफः, वामनेत्रमीकारः,

अर्द्धचन्द्रानुस्वारः ॥ २३ ॥

भुवनेश्वरी पदार्थमाह दक्षिणामूर्ति संहितायां

व्योमबीजे महेशानि कैलासादि प्रतिष्ठितम् ।

वह्निबीजात सुवर्णादि निष्पन्नं बहुधा प्रिये ।

तेनापि वर्त्तते लोको भूमिमंडलसंस्थितः ।

सूर्यस्वरेण पाताले शेषरूपेण धार्यते ।

महाभूमंडलं तस्मात् पातालस्यापि नायिका ।

अतएव महेशानि स वायोः समता भवेत् ।

हकारे व्योम इत्येण स्वरेणानिलसंभवः ।

बिन्दौ सति रेफेण साक्षाद्दहि स्वरूपिणी ।

वह्निबीजं वसुधयं तस्माद्रेफस्य सुन्दरि ।

भुवनेश्वरी मंत्रार्थः ।

~~श्री श्री~~ कालीतन्त्र

~~भगवती चरित्र~~

अतएव महेशानि स कालो: समता भवेत् ।
बिन्दुचक्रा मृतादेवि प्लावयन्ती जगत्त्रयम् ।
उत्पन्ना भवेत्तस्मात् स्रवन्ती चाक्षि मालया ।
अतएव महेशानि भुवनेशीति कथ्यते ॥२५॥

अस्या: पूजाप्रयोग: —

सामान्यपूजापद्धतु क्रमेण प्रात:कृत्यादि पीठन्यासान्तं कर्म्म विधाय दलपद्मस्य पूर्व्वादि केशरेषु मध्ये च पीठशक्तिर्न्यसेत् ।

तद्यथा —

जया विजया अजिता अपराजिता
नित्या विलासिनी दोग्ध्री अघोर मंगला

वाक्यन्तु ॐ जयायै नम: इत्यादि ।

कोर्णकायां ह्रीँ सर्व्वशक्तिकमलासनाय नम: ॥२६॥

~~तत: भूष्यादिन्यास: —~~

अथ भुवनेश्वरीपूजाप्रयोग: ।

२१५ ततः ऋष्यादिन्यासः —

भुवनेश्वरी मन्त्रस्य शक्ति ऋषिर्गायत्रच्छन्दो भुवनेश्वरी देवता हकारो बीजं ईकारः शक्तिः रेफः कीलकं चतुर्वर्गसिद्ध्यर्थे विनियोगः ।

शिरसि शक्तये ऋषये नमः मुखे गायत्री-च्छन्दसे नमः, हृदि भुवनेश्वर्यै नमः, देवतायै नमः, गुह्ये हं बीजाय नमः पादयोः ईं शक्तये नमः, सर्वाङ्गे रं कीलकाय नमः ।

तथा च सारदातिलके —

ऋषिः शक्तिर्भवेच्छन्दो गायत्री देवता मतो ।
कथिता स्वरसंख्येन शोभिता भुवनेश्वरी ।
हतुर्यबीजशक्ति च कीलकं रेफ उच्यते ॥२८॥

ततो मंत्र न्यासं कुर्यात् ।

शिरसि ह्रौं ॐ हृल्लेखायै नमः, खं वदने गगनायै नमः, हृदि उँ रक्तायै नमः, गुह्ये ई करा-लिकायै नमः, पादयोः ॐ महोच्छुष्मायै नमः । एवमुर्द्ध-प्राग याम्यादीच्य-पारिचमेषु मुखेषु न्यासं न्यसेत् ।

215

~~प्रश्न १~~

~~आगमों के शास्त्र का अर्थ समझाइए~~
~~उसके उत्पत्ति पर प्रकाश डालिए~~

एताषां बीजानि निबन्धे —

उत्क्षेपणं पूर्वेण वदने गगनं हृदयाम्बुजे।
रक्तं करालिकां गुह्ये महोच्छुष्मां पदद्वये।
ऊर्ध्वं प्राग्दक्षिणोदीच्य पाश्चिमेषु मुखेषु ता।
सद्यादि पञ्च ह्रस्वा का न्यस्तव्या भूत संग्रमा ॥१॥

ततः कुर्वीत करादिन्यासौ कुर्वीत —

ह्रां अंगुष्ठाभ्यां नमः, ह्रीं तर्जनीभ्यां स्वाहा
हूं मध्यमाभ्यां वषट् हैं अनामिकाभ्यां हुं
ह्रौं कनिष्ठाभ्यां वौषट्, ह्रः करतलपृष्ठाभ्यां फट्।
एवं हृदयादिषु ह्रां हृदयाय नमः इत्यादि।

तथा च —

षड्दीर्घ भाजा बीजेन कुर्यादङ्गानि वै क्रमात्।

स्वच्छन्दसंग्रहे —

स्वरविहाय बीजं तं दीर्घ षट्केन योजयेत्।
षडङ्गानि विधेयानि सर्वव्यापं विधिं स्मृतः।

अङ्गुलिनियमस्तु पूर्वं एवोक्तः ।
कराङ्गन्यासे एवं क्रमः ॥२४॥

ततो भाले ॐ गायत्रीसहितब्रह्मणे नमः,
दक्षिणकपाले ॐ सावित्रीसहितविष्णवे नमः,
वामकपाले ॐ वागीश्वरीसहितमहेश्वराय नमः,
वामकर्णोपरि ॐ श्रीसहितधनपतये नमः,
मुखे ॐ रतिसहितस्मराय नमः, सव्यकर्णोपरि ॐ पुष्टिसहितगणपतये नमः, दक्षिणगंड कर्णान्तरे ॐ शंखनिधये नमः, वामगन्डकर्णान्तराले ॐ पद्मनिधये नमः, मुखे ॐ भुवनेश्वर्यै देवतायै नमः, एवं कन्ठमूले - दक्षिण - स्तन - वामस्तन - वामांश - हृदये - दक्षिणांश - पार्श्वद्वय - नाभिषु एतान् न्यसेत् ।

तथा च —

ब्रह्माणं विन्यसेद्भाले गायत्र्या सह संयुतः ।
सावित्र्या सहितं विष्णुं कपोले दक्षिणे न्यसेत् ।
वागीश्वर्या समायुक्तं वामगन्डे महेश्वरम् ।
न्यसेत् श्रियं धनपतिं वामकर्णाग्रके पुनः ।
रत्या सार्धं मुखे न्यस्य पुष्ट्या गणपतिं न्यसेत् ।

सव्यकर्णोपरि मिथो कर्णगन्धान्तरालयोः ।
नासत्यं वदने मुखं मुखस्थेशां स्तनौ न्यसेत् ॥२९॥

तथा च सारदा तिलके —
कण्ठमूले स्तनद्वन्द्वे वामांसे हृदयाम्बुजे ।
सव्यांसे पार्श्वयुगले नाभिदेशे च दारिकः ॥३०॥

तथा च वर्णविन्यासे तु विश्वसारतन्त्रे —
ॐकाराद्यो ङे॰ युतश्च नमोऽन्तश्च यथा स्थितः ।
विधिना विन्यसेत सर्वं शंकरस्य मतेन च ।
एवं सर्वत्र ॥३१॥

ततो भाले ॐ ब्राह्म्यै नमः, वामांसे ॐ माहेश्वर्यै नमः, वामपार्श्वे ॐ कौमार्यै नमः, जठरे ॐ वैष्णव्यै नमः, दक्षिणपार्श्वे ॐ वाराह्यै नमः, गले ॐ महालक्ष्म्यै नमः, इति न्यस्य तुलेन व्यापकमपि सप्तशो वा कुर्यात् ।

तथा च —
भालेंऽसे पार्श्वजठरे च गले हृदि ।
ब्रह्मण्याद्यास्ततो न्यस्य विधिना प्रोक्तलक्षणा ।

पाठभेदः — भालेंऽसे

२१६

मूलेन व्यापकं देहे न्यस्य देवीं विभावयेदिति ॥३२॥

ततो ध्यानम् —

उद्यद्दिनकरद्युतिमिन्दुकिरीटां

तुङ्गकुचां नयनत्रयसंयुक्ताम् ।

स्मेरमुखीं वराङ्कुशपाशाभीतिकरां

प्रभजद् भुवनेशीम् ।

(33) एवं ध्यात्वा मानसैः सम्पूज्य बाह्यैः पूजामारभेत् ॥

पूजायन्त्रम् —

पद्ममष्टदलं बाह्ये वृत्तं षोडशभिर्दलैः ।

विलिखेत् कर्णिकामध्ये षट्कोणमतिसुन्दरम् ।

चतुरस्रं चतुर्द्वारमेवं मन्डलमालिखेत् ॥३४॥

ततो दीक्षापद्धत्युक्तक्रमेण शंखस्थापनं कुर्यात् ।

ततः सामान्यपूजापद्धत्युक्तक्रमेण पीठपूजां विधाय

पीठशक्तिः पूजयेत् ।

तद्यथा —

पूर्वादिकेशरेषु ॐ जयायै नमः, एवं विजयायै,

अपराजितायै, नित्यायै, विलासिन्यै, दोग्ध्र्यै,

अघोरायै, मध्ये मङ्गलायै ।

तथान्च निबन्धे —

ततः संपूजयेत् पीठं नवशक्तिसमन्वितम् ।
जयाख्या विजया पश्चात् अजिता चापराजिता ।
नित्या विलासिनी दोग्ध्री त्वघोरा मंगलाथिच ।
वीजाख्यमासनं दत्वा मूर्तिं मूलेन कल्पयेत् ।
सर्व्वेष प्रणवादि नमोहन्तेन पूजयेत् ॥ ३८ ॥
तदुपरि ह्रीं सर्व्वशक्तिकमलासनाय नमः ।
ततः पुर्व्ववत् ध्यानावाहनादि पञ्चपुष्पाञ्जलिदान-
पर्य्यन्तं विधाय आवरणपूजामारभेत् ।

सामान्यपूजाप्रक्रम् । ॐ

तद्यथा —

कर्णिकामध्ये ॐ ह्रीं त्रैलोक्याये नमः। पूर्वे ऐं वागनायै नमः। दक्षिणे ॐ रक्तायै उत्तरे ईं क्रालिकायै पश्चिमे ॐ महोच्छुष्मायै षट्कोणेषु पूर्वादिक्रमेण ॐ गायत्र्यै नमः ब्रह्मणे नमः। नैऋत्यै सावित्र्यै विद्यायै वायौ सरस्वत्यै रुद्राय वह्निकोणे श्रियै धनपतये पश्चिमे रत्यै स्मराय ईशान्यां पुष्ट्यै गणपतये षट्कोणस्योभयपार्श्वयोः शंखनिधये सर्वाय प्रणवादि नमोऽन्तं केशरेषु आग्नेयनैर्ऋतिवायव्येशानेषु मध्ये दिक्षु च ह्रां हृदयाय नमः इत्यादिना पूजयेत्।

तथा च निबन्धे —

केशरेष्वाग्नेयकोणादौ हृदयादीनि पूजयेत्।
नेत्रमग्रे दिशास्वस्त्रं ध्यातव्याश्चाङ्गदेवताः।
एवं सर्वत्र। भैरव्यादौ विशेषो वक्तव्यः।
पूर्वादिपत्रेष्वष्टसु ॐ अनङ्गकुसुमायै, एवं

पूर्वादौ करालिन्यै, उमायै

अनङ्गमदनायै, अनङ्गमदनातुरायै, भुवनपालायै, अनङ्गवेगायै, शशिरेखेश्वर्यै गगनरेखायै ।

षोडशदलेषु पूर्वादौ करालिन्यै विकरालिन्यै उमायै, सरस्वत्यै श्रियै, दुर्गायै, उषायै लक्ष्म्यै श्रुत्यै, स्मृत्यै, धृत्यै, श्रद्धायै, मत्यै, कान्त्यै, आर्यायै, तद्बहिः पूर्वादौ अङ्गरूपायै, अङ्गमदनायै भुवनवेगायै भुवनपालिकायै सर्वशिशिरायै, अङ्गवेदनायै, अङ्गमेखलायै ।

प्रणवादिनमोहन्तेनैताः पूजयेत् ।

तद्बहिश्चतुरस्रे पूर्वादौ ॐ लँ इन्द्राय देवाधिपतये आयुधाय सवाहनपरिवाराय नमः ।

ॐ रं अग्नये तोयाधिपतये आयुधाय सवाहनपरिवाराय नमः ।

ॐ यं यमाय ताराधिपतये सायुधेत्यादि ।

ॐ क्षां निऋतये रक्षोधिपतये सायुधेत्यादि ।

खड्गाय अंकुशाय गदायै शूलाय पद्माय
चक्राय प्रणवादिनमोऽन्तेन पूजयेत् ।
ततो धूपादिविसर्जनान्तं कर्म समापयेत् ।
अस्य पुरश्चरणं द्वात्रिंशल्लक्षजापः ॥ ३८ ॥

तथा च —

प्रजपेन्मन्त्रविन्मन्त्रं द्वात्रिंशल्लक्षमानतः ।
त्रिस्वादुपुत्कैर्जुहुयादष्टद्रव्यैर्दशांशतः ॥ ३९ ॥

अष्टद्रव्याणि यथा —

अश्वत्थोदुम्बरप्लक्षन्यग्रोधसमिधास्तिलाः ।
सिद्धार्थपयसाज्यानि द्रव्याणाष्टौ विदुर्बुधाः ।
त्रिस्वादिति घृतमधुशर्करा, इति ॥ ४० ॥

अथ भुवनेश्वरीविविधमन्त्राः ।

मन्त्रान्तरम् —

वाग्भवं शम्भुवनितारमाबीजत्रयात्मकम् ।
मन्त्रं समुद्धरेन्मन्त्री त्रिवर्गफलसाधनम् ।
न्यासपूजादिकं सर्वं पूर्ववच्च समाचरेत् ॥ (५१)

षडङ्गन्यासे तु विशेषः ।

क्षे श्रौँ अङ्गुष्ठाभ्यां नमः इत्यादि ।

तथा च निबन्धे —

षड्दीर्घभाजा बीजेन वाग्भवाद्येन कल्पयेत् ।
षडङ्गानि मनोरस्य जातियुक्तेन कल्पयेत् ॥५३॥

ध्यानस्तु —

सिन्दूरारुणविग्रहां त्रिनयनां
माणिक्यमौलिस्फुरत्
तारानायकशेखरां स्मितमुखीमापीनवक्षोरुहाम् ।
पाणिभ्यां मणिपूर्णरत्नचषकं रक्तोत्पलं बिभ्रतीं
(५४) सौम्यां रत्नघटस्थसव्य(रक्त)चरणां ध्यायेत् पराम् ॥

अस्य पुरश्चरणं द्वादशलक्षजपः ।

तथा च सारदातिलके —

रविलक्षं जपेन्मन्त्रं पायसैर्मधुरान्वितैः ।
(५५) तद्दशांशेन जुहुयात् पीठे प्रागीरिते यजेदितिवचनात् ।

मन्त्रान्तरम् —

वाग्बीजपुटिता माया विद्येयं व्यक्षरी मता ।
अस्य ... ... ॥५६॥

ऐं ह्रां स्रैं अंगुष्ठाभ्यां नमः, ऐं ह्रीं स्रैं हृदयाय नमः इत्यादि।

तथा च —

मध्येन दीर्घपुटेन वाक्पुटेन प्रकल्पयेत्।
षडङ्गानीत्यादि ॥५६॥

ध्यानस्तु —

श्यामाङ्गीं शशिशेखरां निजकरैर्दानञ्च रक्तोत्पलं,
रत्नाढ्यं चषकं परं भयहरं संबिभ्रतीं शाश्वतीम्।
मुक्ताहारलसत्पयोधरनतां नेत्रत्रयोल्लासिनीं,
वन्देऽहं सुरपूजितां हरवधूं रक्तारविन्दस्थिताम्॥

मातङ्गिकाय॥

एवं ध्यात्वा पूर्ववद्यजेत्॥५७॥

अष्टपत्रेषु विशेषः —

आँ ब्राह्म्यै, ईं माहेश्वर्यै ऊँ कौमार्यै, ॠं वैष्णव्यै, ॡं वाराह्यै, ऐँ इन्द्राण्यै, औं चामुण्डायै, अः महालक्ष्म्यै।

पुनरष्टदले —

अं असिताङ्गाय, इं रुरवे उं चण्डाय, ॠं क्रोधाय

ल्रं उन्मत्ताय हं कपालिने, ऊँ भीषणाय,
ऊं संहाराय । नमः सर्वत्र ।

षष्ठी —

ऊं आं असिताङ्ग ब्राह्मीभ्यां नमः इत्यादि ।

तथा च

दीर्घाद्या मातरः प्रोक्ता ह्रस्वाद्या भैरवाः स्मृताः ।
अन्यत् सर्वं पूर्ववद्बोध्यम् ॥५४॥

अस्य पुरश्चरणजपो दशलक्षः ।
त्रिमधुरान्वितैः पलाशपुष्पैर्दशांशहोमः ।

तथा च —

तल्लक्षं जपेन्मंत्रं जुहुयात्तद्दशांशतः ।
पालाशपुष्पैः स्वाद्वक्तैः पुष्पैर्वा राजवृक्षजैः ।
तल्लक्षं दशलक्षम् ।
आवरङ्गत्वात् शक्रे दशतत्त्वामीति वचनाच्चइति
गुरवः । चतुर्विंशतिलक्षमिति केचित् ॥५५॥

मंत्रान्तरम् —

अनलो बिन्दुसंयुक्तो [illegible] ताग्नितारवान् ।

पाशादिव्यक्षरो मंत्रः सर्व्वकामफलप्रदः।
अस्यैकाक्षरवत् ऋषिच्छन्दो देवतान्यासः ॥५०॥

अङ्गमंत्रस्तु —
ह्रौं अंगुष्ठाभ्यां नमः इत्यादि ह्रौं हृदयाय नमः इत्यादि।
ह्रौं बीजेन करांगन्यासौ कुर्यात्।

तथा च [illegible] —
ऋष्यादाः पूर्व्वमुक्ताः स्युर्बीजेनाङ्गक्रिया मता ॥५१॥

ध्यानम् —
वराङ्कुशौ पाशमभीतिमुद्रां
करैर्व्वहन्तीं कमलासनस्थाम्।
बालार्ककोटिप्रतिमां त्रिनेत्रां
भजेऽहमाद्यां भुवनेश्वरीं ताम् ॥५२॥

पूजा तु एकाक्षरीवत्।
अष्टदल ब्राह्म्यादि पूजनं पूर्व्ववत् पूजयेत्।
(53) षोडशदले पूजाया अनुक्तत्वात् षोडशदलाभावः॥
अस्य पुरश्चरणजपो दशलक्षः।
दधिमधुघृत पुष्पैरश्वत्थोदुम्बरप्लक्षाणां

सोमदाभिस्तम्भै दुग्धाक्तै द्वशसहस्रहोमः ।

तथा च —

हविष्यभुग् जपेन्मन्त्रं तद्दलक्षं जितेन्द्रियः ।
तत्सहस्रं प्रजुहुयाज्जपान्ते मंत्रवित्तमः ।
दधिक्षौद्रघृताक्ताभिः समिद्भिः क्षीरभूरुहाम ।
तत्संख्यया तिलैः शुद्धैः दूर्वाक्तैर्जुहुयात्ततः ।
अत्र तत्पदशब्देन दश उच्यन्ते शब्दैर्दशतत्वानीति वचनात् ।
अन्ये तु भुवनेश्वरी मंत्रान मिवन्धाः अप्रसिद्धत्वात् ।

अथान्नपूर्णा मंत्राः ।

माया हृद भगवत्यन्ते माहेश्वरीमदं ततः ।
अन्नपूर्णे द्व्युगलं मनुः सप्तदशाक्षरः ॥ 55 ॥

कल्पे च —

प्रणवाद्यं यदा देवि तदा सप्तदशाक्षरी ।
अन्नप्रदा मोक्षदा च सदा विभवदायिनी ॥ 56 ॥
मायाद्या च सदा देवि तदा सा सकलेप्सदा ।
श्रीबीजमाद्या यदा देवि तदा सुखविवर्द्धिनी ॥ 57 ॥
वाग्बीजाद्या यदा ... वागीशत्वप्रदायिनी ।

कामाद्या च यदा विद्या सर्वकामप्रदायिनी ॥58॥
तारमायादिका विद्या भोगमोक्षप्रदायिनी ।
माया श्री बीजयुग्माद्या सदाविभवदायिनी ।
श्री मायायुग्मबीजाद्या सर्वसम्पत्तिपूरणी ॥59॥

(अथ) अस्याः अन्नपूर्णा पूजा प्रयोगः ।

प्रातः कृत्यादि पीठन्यासान्तं विधाय हृत्पद्मस्य केशरे मध्ये च भुवनेश्वरीपीठमन्वन्तं पीठशक्तीन्यस्य ऋष्यादिन्यासं कुर्यात् ।

तद्यथा —

शिरसि ब्रह्मणे ऋषये नमः, मुखे पङ्क्तिच्छन्दसे नमः, हृदि अन्नपूर्णायै देवतायै नमः ।

तत्रैव —

तेषाञ्च मंत्रराशीनां ऋषिर्ब्रह्मा उदाहृतः ।
पङ्क्तिः छन्दः समाख्यातं देवतान्नपूर्णिका ॥60॥

ततः कराङ्गन्यासौ —

ह्रीं अंगुष्ठाभ्यां नमः, ह्रीं हृदयाय नमः इत्यादि ।
सर्वत्र मायाबीजेन कुर्यात् ।

तथा च निबन्धे —

अङ्गानि मायया कुर्य्यात्ततो देवीं विचिन्तयेत् ।

कल्पे च —

(61) यद्दीजाद्या भवेद्विद्या तद्दीजेनाङ्ग कल्पना ॥

ततो ध्यानम् —

रक्तां विचित्रवसनां नवचन्द्रचूडामन्न-
प्रदाननिरतां स्तनभारनम्राम् ।
नृत्यन्तमिन्दुशकलाभरणं विलोक्य
हृष्टां भजे भगवतीं भवदुःखहन्त्रीम् ॥

(62) एवं ध्यात्वा मानसैः संपूज्य शङ्खस्थापनं कुर्यात् ।
ततः सामान्योक्तपीठपूजां विधाय भुवनेश्वरीमन्त्रो-
क्तजयादि पीठमन्त्रान्तं पीठपूजां विधाय पुन-
र्ध्यात्वा आवहनादि पञ्चपुष्पाञ्जलिदानपर्य्यन्तं
कर्म्म विधाय आवरणपूजामारभेत् ।

तद्यथा —

केशरेषु आग्निकोणे ह्रीं हृदयाय नमः,
नैऋते ह्रीं शिरसे स्वाहा, वायव्ये ह्रीं
शिखायै वषट्, ऐशान्यां ह्रीं कवचाय हुँ,

मध्ये ह्रौँ नेत्रत्रयाय वौषट्, चतुर्दिक्षु ह्रौँ अस्त्राय फट् ।

अष्टदलेषु —

पूर्वादिक्रमेण ब्राह्म्यै माहेश्वर्यै कौमार्यै वैष्णव्यै वाराह्यै इन्द्राण्यै चामुण्डायै महालक्ष्म्यै प्रणवादि-नमोऽन्तेन पूजयेत् ।

तत्रैव —

दलेषु पूजयेद्देवीर्ब्राह्म्याद्याः क्रमतः सुधीः ।

X अस्य पुरश्चरणजापः षोडशसहस्रसंख्यः । X

शूद्रस्य प्रणवश्चतुर्दशस्वरो बिन्दुसंयुक्तः ।

कालिकापुराणे मन्त्रस्य सेतुकरण उक्तत्वात् —

तथा च —

चतुर्दशस्वरेणाढ्यं बिन्दुभूषितमस्तकम् ।

शूद्रस्य प्रणवं देवि कथितं तत्त्ववेदिभिः ॥६३॥

ततः पूर्वादौ इन्द्रादीन् वज्रादींश्च पूर्ववत् संपूज्य धूपादिविसर्जनान्तं कर्म समापयेत् ।

अस्य पुरश्चरणजापः षोडशसहस्रसंख्यः ।

तथा च —

यद्वा विद्या जपेन्मन्त्रं वसुयुग्मसहस्रकम् ।
आज्येनाग्नौ जुहुयाद्दशांशमनन्तरम् ।
अयं मन्त्रः प्रणवादिरष्टादशाक्षरः ।
मायादिः श्रीबीजादिश्च ।
तथा मायां विना प्रणवादिः कामादि श्रीबीजा-
दिर्वाग्भवादिश्च सप्तदशाक्षरः कवचे तथाप्रति-
पादनात् ।

विशेषस्तु —

(64) यद् यद्बीजादिको मन्त्रस्तेन वा तु प्रकल्पना ॥

अथ त्रिपुरा मन्त्राः ।

श्रीमायामदनैः प्रोक्तो मन्त्रो बीजत्रयात्मकः ॥65॥

त्रिपुरापञ्चम् ।

अस्याः पूजाप्रयोगः —

तत्र पूजायन्त्रं तदुक्तम् दशपटल्याम् —
षट्कोणं पूर्वमालिख्य मध्ये विद्यां लिखेत् सुधीः।
वीप्सयाताम्तु षट्कोणकोणेषु क्रमतो लिखेत्।
बाह्ये वसुदलं कुर्याद्दीर्घस्वरविभूषितम्।
चतुरस्रं चतुर्द्वारविभूषितं मंडलं लिखेत्।
(66) मध्ये देवीं समावाह्य ध्यायेत् सर्वसमृद्धिदाम्॥
ततः प्रातः कृत्यादि पीठन्यासान्तं कर्म विधाय
भुवनेश्वरी मंत्रोक्त- जयादि पीठमन्त्रं विन्यस्य
ऋष्यादिन्यासं कुर्यात्।

तद्यथा — ऋषये नमः,
शिरसि सम्मोहनऋषये गायत्री देवता पुनः।
मुखे गायत्रीच्छन्दसे नमः हृदि त्रिपुटायै देवतायै
नमः।

ततः कराङ्गन्यासौ —
श्रीं अङ्गुष्ठाभ्यां नमः, ह्रीं तर्जनीभ्यां स्वाहा,
क्लीं मध्यमाभ्यां वषट्, श्रीं अनामिकाभ्यां हुं,
ह्रां कनिष्ठाभ्यां वौषट्, क्लीं करतलपृष्ठाभ्यां
फट्। श्रीं हृदयाय नमः इत्यादि।

तथा च निबन्धे —

ऋषिः संमोहनश्छन्दो गायत्री देवता पुनः ।
(67) त्रिपुटाख्या ह्रीं श्रीं क्लीं स्तैर्बीजैरङ्गानि षट्क्रमात् ॥

ततो ध्यानम् —

पारिजातवने रम्ये मंडपे मणिकुट्टिमे ।
रत्नसिंहासने रम्ये पद्मे षट्कोणशोभिते ।
अधस्तात् कल्पवृक्षस्य निषण्णां देवतां स्मरेत् ।
चापं पाशाम्बुजसरसिजान्यङ्कुशं पुष्पबाणान्,
संबिभ्राणां करसरसिजैरत्नमौलीं त्रिनेत्राम् ।
हेमाभाभां कुचभरनतां रत्नमञ्जीरकाञ्ची,
ग्रैवेयाद्यैर्विलसिततनुं भावयेच्छक्तिमाद्याम् ॥
चामरादर्शताम्बूलकरण्डकसमुद्गकान् ।
वहन्तीभिः कुचार्त्ताभिर्दूतीभिः परिवारिताम् ।
करुणामृतवर्षिण्या पश्यन्तीं साधकं दृशा ॥
अंबुजं पद्मं न तु शंखं दधतीं पद्मयुगलमिति दक्षिणामू०
(68) एवं ध्यात्वा मानसैः संपूज्य शंखस्थापनं कुर्यात् ॥
ततः सामान्यपूजाय उक्तपीठपूजा विधाय
केशरेषु ... मन्त्रोक्त जयादि पीठ-

मन्त्रं संपूज्य पुनर्ध्यात्वा आवाहनादि पञ्चपुष्पां
जलिदान पर्यन्तं विधाय आवरणपूजामारभेत् ।

तद्यथा —

अग्न्यादि षट्कोणेषु ॐ महालक्ष्म्यै नमः,
ॐ हरये नमः, एवं गौर्यै, शिवाय, रत्यै, कामा
य, षट्कोणस्थो मध्यपार्श्वयोः ॐ शंखनिधये
नमः, ॐ पद्मनिधये नमः ।
ततः केशरेषु ~~ब्राह्म्या~~ अग्न्यादिकोणचतुष्टयेषु
मध्ये दिक्षु च श्रीं हृदयाय नमः इत्यादिना
षडङ्गानि पूजयेत् ॥ ६९ ॥
ततः पत्रेषु ब्राह्म्याद्या मातरः पूज्याः ।

तथा च निबन्धे —

अग्न्यादि षट्सु कोणेषु लक्ष्म्याः पूजयेद् ध्रुवम् ।
लक्ष्मीं हेमप्रभा तन्वीं सकराब्जयुगाम्बयाम् ।
(श्रुतिवचनात्) शंखचक्रगदाम्भोजाधरं हेमनिभं हरिम् ।
नीलोत्पलकरां सौम्यां रतिं काञ्चनसन्निभाम्
धृतपाशाङ्कुशेष्वासं पुष्पेषुमरुणं स्मरम् ।
पूर्वी[illegible]मुख्य[illegible]पार्श्वयोः ।

हृदे च नमः, नाभौ हे नमः, गुह्ये क्ष नमः, ऊर्व्वोः स्त्रीं नमः, जान्वोः हुं नमः जङ्घयोः क्षे नमः पादद्वन्द्वे फट् नमः ॥७७॥
मूलेन व्यापकं कुर्य्यात् ।
तथा च निबन्धे —
मायाविवर्जितान् वर्णान् मूर्द्धि भाले गले ।
नाभिगुह्योरुयुग्मेषु जानुजङ्घापदेषु च ।
(78) विन्यस्य व्यापकं कुर्य्यात् सम्यक्स्तोत्रेव साधकः ।
कराङ्गन्यासौ —
च्छेह अङ्गुष्ठाभ्यां नमः, क्षोच तर्ज्जनीभ्यां स्वाहा, क्षस्त्रीं मध्यमाभ्यां वषट् स्त्रीं हुं अनामिकाभ्यां हुं, हु क्षे कनिष्ठाभ्यां वौषट्, क्षे फट् करतलपृष्ठाभ्यां फट् एवं च्छेह तदयाय नमः इत्यादि ।
तथा च निबन्धे —
कुम्भाद्यैः सप्तभिर्व्वर्णैः पूर्व्वपूर्व्वविवर्जितैः ।
(79) [illegible] साधकसत्तमः ॥

तता ध्यानम्—

श्यामां बर्हिकलापशेखरयुतामाबद्धपर्णांशुकां
गुञ्जाहारलसत्पयोधरनतामष्टाहिपान् बिभ्रतीम्।
ताडङ्काङ्गदवेखलागुणरणन्मञ्जीरतां प्राबितान्
कैराती वरदाभयोद्यतकरां देवीं त्रिनेत्रां भजे॥

(४०) एवं ध्यात्वा मानसैः सम्पूज्य शंखस्थापनं कुर्यात्।
ततः सामान्योक्तपीठपूजां विधाय पद्मस्य
केशरेषु पूर्वादिक्रमेण जया-विजया-अजिता
अपराजिता-नित्या-विलासिनी-दोग्ध्री-अघोरा
मङ्गला, प्रणवादिनमोऽन्तेन पूज्याः।
मध्ये क्लं हुं हुं वज्रदेहे घुरु-घुरु हिंलु-
हिंलु गर्जे गर्जे हं हुं क्लां पद्मासनाय नमः
ततः पूर्ववद्ध्यात्वा आवाहनादि पञ्चपुष्पाञ्जलि-
दानपर्यन्तं विधाय आवरणपूजामारभेत्।
अग्न्यादिकोणेषु चतुर्षु गायत्र्यै हृदयाय नमः।
क्षेत्र गायत्र्यै शिरसे स्वाहा क्लम्ली गायत्र्यै
शिखायै वषट् स्त्री हुं गायत्र्यै कवचाय हुं
हुं क्लो गायत्र्यै नेत्रत्रयाय वौषट् दिक्षु क्लें फट्

गायत्र्यै अस्त्राय फट् ।

तथा च निबन्धे —

अहः प्रजोतां गायत्रीं केशरेष्वर्चयेत्क्रमात् ।
दलेषु पूजयेदेताः श्रीबीजाद्याः सुशोभिताः ।
हुँकारीं खेचरीं चण्डां छेदनीं क्षेपणीं स्त्रियम् ।
हुंकारीं क्षेमकारीञ्च लोके सापुष्पभूषणाम् ।
फट्कारीमग्रतो बाह्ये कोदण्डशरधारिणीम् ।

वाक्यान्तु —

श्रीं हुंकार्यै नमः इत्यादि बाह्ये अग्रतः ॐ फट्कारिण्यै नमः । द्वारस्योभयपार्श्वयोः ॐ जयायै नमः ॐ विजयायै नमः ।
तद्बाह्ये किङ्कराय रक्ष रक्ष त्वरिताज्ञां स्थिरो भव हुं फट् इति मन्त्रेण किङ्करं पूजयेत् ।

तथा च निबन्धे —

द्वारस्य पार्श्वयोः पूज्ये भवेत्कराम्बुजे ।
जयाख्या विजयाख्या च किङ्कराय पदं ततः ।
रक्ष रक्ष पदस्यान्ते त्वरिताज्ञा स्थितो भव ।
वर्म्मास्त्रान्तेन मनुना किङ्करं तद्बहिर्यजेत् ।

27. 11 68-69

जहाँ बजती हैं शहनाई वहाँ मातम भी होते
जहाँ खुशियाँ भी होती हैं। वहाँ गम भी मनते

